गद्यमयं

# महा-भारतम्

निगदिता —

**श्री आचार्य राजेन्द्रनाथः शास्त्री**

आचार्यः श्री० द० वे० वि०, उपाध्यक्षः श्री० द० वि० पी०

संस्थापकः श्री० द० प० म०, सम्पादकः 'दयानन्द संदेशस्य'

अप्रकाशित-सानुवृत्ति-विषयविभागसंवलित—मूल-

पाणिनीयाष्टक-सम्पादकः, वर्णोच्चारण-शिक्षा-

ष्टाध्यायी-भाष्यकर्ता, सिद्धान्त-कौमुद्याः

आलोचकः, संस्कृत-व्याकरण-

प्रकाशादीनां ग्रन्थानां

रचयिता



प्रकाशक —

**रोशन बुक डिपो,**

**पुस्तक प्रकाशक तथा विक्रेता**

नई सड़क, देहली।

सं० २००६

# विषय-सूची


| | |
|---|---|
| १—कथा-प्रवेशः | १ |
| २—मंगलाचरणम् | ४ |
| ३—भारतसूत्रम् | ७ |
| ४—महाभारतप्रशंसा | १२ |
| ५—पुरुवंशानुकीर्तनम् | १६ |
| ६—राजराजेश्वरः शान्तनुः | २३ |
| ७—वीरः चित्राङ्गदः | ३३ |
| ८—पृथिवीपतिः विचित्रवीर्यः | ३५ |
| ९—विचित्रवीर्यस्य सुतोत्पत्तिः | ४२ |
| १०—राजा पाण्डुः | ५३ |
| ११—पाण्डोः विवाहः | ५६ |
| १२—कुन्ती स्वयंवरः | ५८ |
| १३—पाण्डोः अपरो विवाहः दिग्विजयश्च | ६० |
| १४—वनगोचरः पाण्डुः | ६५ |
| १५—विदुर-विवाहः | ६६ |
| १६—गान्धारी-सुतोत्पत्तिः | ६६ |
| १७—पाण्डोः वानप्रस्थः | ७२ |
| १८—कुन्ती सुतोत्पत्तिः | ७९ |
| १९—माद्र्यां सुतोत्पत्तिः | ८७ |
| २०—पाण्डु परमः | ८९ |
| २१—सत्यवत्याः स्नुषयोः च वानप्रस्थः | ९८ |

२२—पाण्डवानां बाल्यम् ९९

२३—द्रोणशिष्य-परीक्षा १०६

२४—अस्त्र-प्रदर्शनम् ११७

२५—द्रुपद-शासनम् १३०

२६—युधिष्ठिरस्य-यौवराज्यम् १३८

२७—कणिक मन्त्रणा १४१

२८—पौराणां मतम् १४८

२९—वारणावत-यात्रा १५२

३०—वारणावत गमनम् १५६

३१—जतुगृह-वासः १३६

३२—जतुगृह-दाहः १६५

३३—गङ्गोत्तरणम् वनप्रवेशः च १६९

३४—व्यास-दर्शनम् १७५

३५—स्वयंवरे पाण्डवागमनम् १७९

३६—धृष्टद्युम्न-घोषणा १८२

३७—लक्ष्य छेदनम् १८६

३८—पाण्डव-प्रत्यागमनम् १९५

३९—रामकृष्ण-गमनम् १९९

४०—धृष्टद्युम्न-प्रत्यागमनम् २०१

४१—पाण्डव-समाचारः २१४

४२—पाण्डवानयन-मन्त्रणा २१७

४३—विदुर-गमनम् २२९

४४—राज्य-लम्भः २३४



# विनिवेदनम्

समस्ते ऽपि महीतले संभाष्यमाणानामार्य-भाषाणां संस्कृतं नाम दैवी वाक् परम्परया साक्षाद्वा जननी, किमुत अखण्डे ऽपि भारत-खण्डे व्यवह्रियमाणानां प्रान्तीयानां वाचाम् इति सर्ववादिभिर् अभिमतम् मतम्। स्वातन्त्र्य-समीर-समीरितं भारतं माननीय-श्री-काटजु-वीरसावरकर-प्रभृतीनां भारताभि-जन-संभावितानां 'तदेव संस्कृतं भारतीयानां राष्ट्र-भाषा-पदम् अलङ्कर्तुमर्हम्' इति श्रावं श्रावं कमपि अनिर्वचनीयममन्दमानन्दमवगाहते चेतः।

परं कष्टम्! अनन्त-पारमहोदधिवत् विस्तीर्णम् अपि संस्कृतवाङ्मयं साहित्य-परीक्षायै निकषायमाणेषु कविमूर्धन्य-बाण-कृष्ण-दण्डि-विरचितेषु कादम्बरी-वासवदत्ता-दशकुमारचरितेषु देदीप्यमानेष्वपि महाकाव्येषु तद्दुरूहतया स्वल्पतया च जीवन-सामान्योपयोगिना जीवन-साधारणोपयुक्तेनानवद्येन गद्येन विरहितमिव वैदेशिकाक्रमणाद्वा, काल-परक्षियाद्वा, विद्वज्जनानवेक्षणाद्वा समुपयुक्तगद्यानुपलब्धतया, अद्यतनीय-विद्वज्जन- विनिर्मितानां च गीर्वाण-वाणी-संदर्भाणाम् अनभ्यासानुपात्त-लौकिकव्यवहाराभावतया च संस्कृताध्ययेतॄणां संस्कृत-भाषां

राष्ट्र-भाषा-पदारूढा दिदृक्षूणां छात्राणाम् अनुपन्नम् ।'
इति मनसि निधाय मान्याः विद्वज्जन-वन्द्या महामहोपाध्यायाः श्री लक्ष्मीधर-शास्त्रिणः' रामायण-महाभारतादीनि महाकाव्यानि इतिहास-पुराण-पञ्चम-वेदादिभिः सम्मानसूचिभिरभिधानैः प्रसिद्धानि 'यन्नेहास्ति, न तत् क्वचित्' इति घोषणां डिंडम-घोषेण उद्घोषमाणानि अद्यापि पञ्च-सहस्र-वर्ष-पूर्वतनीयम् भारतीयाभिजनाभिपूजितं जनसाधारणाभि-प्रवृत्तं राष्ट्र-भाषा-हिन्दी-निभं भारती-प्रस्रवणम् अक्षुण्णम् अनाविलम् उपस्थापयन्ति । पद्यमयमपि तत् मध्य-कालीन-समास-बहुल-दण्डायमान-जटिल-शैली-विरहितं प्रसाद-गुण-युक्तं, भाव-भाराभिक्रान्तं कस्य सुधियो मनो न विनोदयति । तद्धि गद्यरूपेण विपरिणामितं धाराप्रवाहरूपेण संस्कृत-भाषा-भाषि-जन-व्यवहृतं संस्कृतमुपस्थापयत् कस्य संस्कृतमभ्यासिसिषोः छात्रस्य हितावहं कल्याणकरञ्च न भवेत् ।' इति विचिन्त्याक्षय गद्यमयस्य सुसंगतस्य निरुपाख्यानस्य महाभारतस्य लेखने प्रकाशने च माम् प्रोत्साहितवन्तः ।

ज्ञानाकरं महा-भारतमादौ महर्षिणा व्यासेन विरचितम्* । ततस्तदभ्यनुज्ञातेन तच्छिष्येण वैशम्पायनेन कुरुक्षेत्रे जनमेजयस्य दीर्घ-सत्रे श्रावितम् । तच्छ्रुत्वा नैमिषारण्ये लोमहर्षण-पुत्रः सौतिरुग्रश्रवाः शौनकस्य

* नैतदभिमतम् अभिनवस्य गवेषणस्य ।

कुलपतेः द्वादश-वार्षिके सत्रे श्रावितवान्। ततस्ततः समस्तेऽपि भारते महाभारतस्य प्रसारोऽभूत् । परम्परया विभिन्नेषु प्रान्तेषु शतशः हस्तलिखिताः प्रतयः प्रचारमवापुः। लेखकैश्च तत्रापि भारतस्य महत्त्वं ख्यापयितुं स्वमनीषया नानाविधानि उपाख्यानानि, चित्राः कथाः, अघटिताश्च घटनाः सन्निवेशिताः। तत्सर्वं रुचिकरमपि सत् असत्परम्। तच्च सर्वं सहेतुकं ग्रन्थान्ते विस्तीर्णायां प्रस्तावनायाम् उपस्थापयिष्यते।

हितकाम्यया प्रयासोऽयमध्येतॄणां कल्याणाय भवतु।

स्वतन्त्रता दिवसः
श्री दयानन्द वेद विद्यालयः,
देहली
१६५०

इति
विनिवेदयति
निरुद्धिता
आचार्यो राजेन्द्रनाथः शास्त्री



ओ३म्

श्री महर्षि व्यास प्रणीतं

निरुपाख्यानं सुसंगतं




# गद्यमयं महाभारतम्

## कथा-प्रवेशः

ओम् नारायणं नमस्कृत्य, नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतींचैव ततो जयमुदीरयेत् ॥ १ ॥

कदाचिन्नैमिषारण्ये शौनकस्यकुलपतेर् द्वादशवार्षिके सत्रे लोमहर्षण-पुत्रः सूत-नन्दनः (सौतिः) पौराणिक उग्र-श्रवाः विनयावनतो भूत्वा सुखासीनान् संशितव्रतान्ब्रह्मर्षीन् अभ्यगच्छत् । तपस्विनां नैमिषारण्यवासिनाम् चित्राः कथाः श्रोतुन्तत्राश्रममनुप्राप्तं तं परिवव्रुः । सद्भिश्चैवाभिपूजितः सर्वानेव तांस्तु मुनीनभिवाद्य कृताञ्जलिस्तपोवृद्धिम्-अपृच्छत् ।

अथ लौमहर्षणिः सर्वेष्वेव तपस्विषूपविष्टेषु विन-यान्निर्दिष्टमासनं भेजे ।

अथ तत्र कश्चिदृषिस्ततस्तं तु सुखासीनं वि-श्रान्तञ्चोपलक्ष्य कथाः प्रस्तावयन् अपृच्छत्—

ओ३म्

श्री महर्षि व्यास प्रणीतं
निरुपाख्यानं सुसंगतं



# गद्यमयं महाभारतम्

## कथा-प्रवेशः

ओम् नारायणं नमस्कृत्य, नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतींचैव ततो जयमुदीरयेत् ॥ १ ॥

कदाचिन्नैमिषारण्ये शौनकस्यकुलपतेर् द्वादशवार्षिके सत्रे लोमहर्षण-पुत्रः सूत-नन्दनः (सौतिः) पौराणिक उग्र-श्रवाः विनयावनतो भूत्वा सुखासीनान् संशितव्रतान्ब्रह्मर्षीन् अभ्यगच्छत् । तपस्विनां नैमिषारण्यवासिनाम् चित्राः कथाः श्रोतुन्तत्राश्रममनुप्राप्तं तं परिवव्रुः । सद्भिश्चैवाभिपूजितः सर्वानेव तांस्तु मुनीनभिवाद्य कृताञ्जलिस्तपोवृद्धिम्-अपृच्छत् ।

अथ लौमहर्षणिः सर्वेष्वेव तपस्विषूपविष्टेषु विन-यान्निर्दिष्टमासनं भेजे ।

अथ तत्र कश्चिदृषिस्ततस्तं तु सुखासीनं वि-श्रान्तञ्चोपलक्ष्य कथाः प्रस्तावयन् अपृच्छत्—

"सौते कुत आगम्यते ! कमलपत्राक्ष ! अयश्च कालः त्वया कुत्र विहृतः । पृच्छतो मम एतच्छंस ।"

एवं पृष्ठो वचनसम्पन्नो लौमहर्षणिस्तेषां भावितात्मनां मुनीनां विस्तीर्णे सदसि तेषाञ्चरिताश्रयं वाक्यं यथावत् सम्यगब्रवीत् ।

सौतिरुवाच—"पार्थिवेन्द्रस्य पारीक्षितस्य राजर्षेः महात्मनो जनमेजयस्य समीपे दीर्घ * सत्रे कृष्ण-द्वैपायनप्रोक्ताः सुपुण्या विविधाः कथाः—वैशम्पायनेन अपि वै या विधिवत् कथिताः—ता विचित्रार्था महाभारतसंज्ञिताः श्रुत्वाहं बहूनि तीर्थान्यायतनानि च संपरिक्रम्य तं देशं गतवानस्मि यत्र पुरा कुरूणां पाण्डवानाञ्च, सर्वेषां च महीक्षितां युद्धमभवत् । तस्मात् भवतां दिदृक्षुरिह समीपमागतः । अस्मिन् यज्ञे सूर्यपावकवर्चसो महाभागा आयुष्मन्तः सर्वे एव मे ब्रह्मभूता मताः । कृताभिषेकाः शुचयः कृतजप्या हुताग्नयो भवन्तः स्वस्था आसते ? द्विजाः ! ब्रवीमि किमहम्—पुराणसंहिताः, पुण्या धर्मार्थसंश्रिताः कथाः, नरेन्द्राणां, ऋषीणां, महात्मनाञ्च इतिवृत्तम् ?"

---

*१-सर्प सत्र इत्यपपाठः; ३ अ० १श्लो० इत्यत्र जनमेजयः पारीक्षितः दीर्घं सत्रमुपासते इति प्रतिपादनात् ।

ऋषय ऊचुः । "परमर्षिणा द्वैपायनेन यत् पुराणं प्रोक्तम्, सुरैः ब्रह्मर्षिभिश्चैव श्रुत्वा यदभिपूजितम् तस्य विचित्र-पद-पर्वण आख्यानवरिष्ठस्य सूक्ष्मार्थ-न्याय-युक्तस्य, वेदभूषितस्य भारतस्येतिहासस्य पुण्यां, ग्रन्थार्थसंयुतां संस्कारोपगतां, ब्राह्मीं, नाना-शास्त्रोपबृंहितां, चतुर्भिर्वेदैस्संयुक्तां, पुण्यां, पाप-भया-पहाम्, अद्भुतकर्मणो व्यासस्य संहितां श्रोतुमिच्छामः; यां द्वैपायनाज्ञया ऋषिर्वैशम्पायनस्तुष्ट्या राज्ञो जन-मेजयस्य *[२]सत्रे यथावत् उक्तवान् ।"



*२-सत्रे इति कथनेन सप सत्रं कल्पनोपज्ञम् प्रक्षिप्त-ञ्चेति ध्वनितम् ।

# मङ्गलाचरणम्

सौतिरुवाच—

" आद्यं पुरुषमीशानं पुरुहुतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥
परावराणां स्रष्टारं पुराणं परमव्ययम् ।
नमस्कृत्य हृषीकेशं चराचर गुरुं–हरिम् ॥
महर्षेः पूजितस्येह सर्वलोकै र्महात्मनः ।
प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुतकर्मणः ॥

जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घ-सत्रमुपास्ते। अथ तत्र होता बभूव च्यवनस्यान्वये ख्यातो वेदविदां वरो ब्राह्मणश्चण्डभार्गवः । अथ विद्वान् वृद्धो ब्राह्मणः कौत्सो जैमिनिः उद्‌गाता शार्ङ्गरवो ब्रह्मा अथाध्वर्युश्चापि पिङ्गलोऽभवत् । पुत्र–शिष्य–सहायवान् यवासः सदस्यश्चाभवत् उद्दालकः, प्रमतकः, श्वेतकेतुः पिङ्गलः, असितः, देवलः, नारदः, पर्वतः, आत्रेयः, कुण्डजठरौ, द्विजः कालघटः जपस्वाध्यायशीलवान् वृद्धो-वात्स्यः,श्रुतश्रवाः, कोहलो, देवशर्मा, मौदगल्यः सम-सौरभः, एतेऽन्ये च बहवो वेदपारगाः ब्राह्मणास्तत्र ह पारि-क्षितस्य सत्रे सदस्या अभवन् ।

तदा विद्वान् ऋषिः कृष्णद्वैपायनो दीर्घसत्राय दीक्षितं जनमेजयं श्रुत्वाभ्यागच्छत् ।

तथा स महात्मा वेदवेदाङ्गपारगैः शिष्यैः सहितो राजर्षेः जनमेजयस्य सदो विवेश । तत्र यज्ञसंस्तरे देवैरिव पुरन्दरं बहुभिः सदस्यैः मूर्धाभिषिक्तैः नानाजनपदेश्वरैः, कुशलैः ब्रह्मकल्पैः ऋत्विग्भिश्च वृतमासीनं राजानं जनमेजयं ददर्श । भरतसत्तमोराजर्षिः जनमेजयस्तु तमृषिमागतं दृष्ट्वा प्रीत्या तूर्णं सगणोऽभ्युद्ययौ । सदस्यानुमतः प्रभुस्तस्मै काञ्चनं विष्टरमासनं कल्पयामास यथा शक्रो वृहस्पतये * । राजेन्द्रो देवर्षिगणपूजितं वरदं तत्रोपविष्टं शास्त्रदृष्टेन कर्मणा पूजयामास । तदर्हाय पितामहाय कृष्णाय पाद्यमाचमनीयमर्घ्यं गां च विधानतो न्यवेदयत् । तदा व्यासः पाण्डवाज्जनमेजयात् तां पूजां प्रतिगृह्य गाञ्चैव समनुज्ञाप्य प्रीतोऽभवत् । तथा च तं प्रपितामहं प्रण्यात् पूजयित्वा प्रीतात्मा उपोपविश्यानामयं पर्यपृच्छत् ।,

भगवानपि तं दृष्ट्वा, कुशलं च प्रतिवेद्य सर्वैः सदस्यैः पूजितः सदस्यान् प्रत्यपूजयत् ।

ततः पश्चात् तु सर्वैः सदस्यैः सहितो जनमेजयः कृताञ्जलिः द्विजश्रेष्टमिदं पर्यपृच्छत्—

जनमेजय उवाच—भवान् कुरूणां पाण्डवानां च

* वृहस्पतेः इति आर्षः प्रयोगः ६०–११ ।

प्रत्यक्षदर्शिवान् । द्विज ! तेषां चरितं त्वया कथ्यमानमिच्छामि । तेषामक्लिष्टकर्मणां कथं भेदोभवत्* तच्च भूतान्तकरणं महत् युद्धं दैवेनानिष्टचेतसां सर्वेषां पिता-महानां कथं वृत्तम् ? द्विजोत्तम ! एतद् यथावृत्तं कात्स्न्येंन* मामाचक्ष्व ।

सौतिरुवाच—तदा कृष्णद्वैपायनस्तस्य तद्वचनं श्रुत्वान्तिके आसीनं शिष्यं वैशम्पायनं शशास ।

व्यास उवाच—कुरूणां पाण्डवानांच पुरा यथा भेदो ऽभवत्, यन्मत्तः श्रुत्वानसि तदस्मै सर्वमाचक्ष्व !

गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ।
आचचक्षे ततः सर्वमितिहासं पुरातनम् ॥
राज्ञे तस्मै सदस्येभ्यः, पार्थिवेभ्यश्च सर्वशः ।
भेदं सर्व-विनाशं, च कुरूपाण्डवयोस्तदा ॥

इति श्री महाभारते शतसाहस्र्यांसंहितायां कथा प्रवेशः ॥

---

* भवत् इत्यार्षः प्रयोगः ६०—१९
* मम „ „ ६०—२०

# भारत सूत्रम्

वैशम्पायन उवाच—

"गुरवे प्राङ् नमस्कृत्य, मनोबुद्धि-समाधिभिः ।
संपूज्य च द्विजान् सर्वान्, तथान्यान् विदुषो जनान् ।
महर्षेः विश्रुतस्येह, सर्व लोकेषु धीमतः ।
प्रवक्ष्यामि मतं कृत्स्नं, व्यासस्य महात्मनः ॥२॥

राजन् ! इमां भारतीं कथां श्रोतुं त्वां पात्रं प्राप्य गुरो वक्त्र-परिस्पन्दो मे मनः प्रोत्साहयतीव *। राजन् ! कुरुपाण्डवयोः यथा भेदोऽभूत्, राज्यार्थे द्यूतः सम्भूतः, तथैव च वनवासः, यथा च पृथिवी-क्षयकारकं युद्धमभवत्, भरतर्षभ ! शृणु ! तत्ते पृच्छतेऽहम् कथयिष्यामि ।

मृते पितरि ते वीरा वनात् स्वमन्दिरमेत्य वेदे धनुषि च न चिरादेव विद्वांसोऽभवन् । कुरवस्तान् पाण्डवान् तथा सत्ववीर्यौजसम्पन्नान्' पौरसम्मतान्, श्रीयशोभृतो दृष्ट्वा नामृष्यन् ।

ततः क्रूरो दुर्योधनः, *३ स सौवलः कर्णश्च तेषां विविधान् निग्रह-निर्वासान् समारभन्त *२ । ततः कुलि-

---

१ * प्रोत्साहतीव इत्यार्षः ६१—३
२ * समारभन् । ६१—८ *३ सह इत्यार्षः

ङ्गस्य मते स्थितः शूरो दुर्योधनो राज्यहेतोः पाण्डवान् विविधोपायैर् अपीडयत् ।

अथ धृतराष्ट्रजः पापो भीमाय विषं ददौ, वीरो वृकोदरः सहान्नेन तज्जरयामास । पुनर् वृकोदरं भीमं प्रमाण-कोट्यां संसुप्तं बद्ध्वा गङ्गायाः तोयेषु प्रक्षिप्य पुरमाव्रजत् । यदा कौन्तेयो महाबाहुः भीमसेनो विबुद्धः तदा बन्धनं संछिद्य गतव्यथः उदतिष्ठत् ।

आशीविषैः कृष्णसर्पैः चैनं सुप्तं सर्वेषु अङ्ग-देशेषु अदंशयत्, शत्रुहा च न ममार । महामतिः विदुरस्तु तेषु-तेषु विप्रकारेषु मोक्षणे प्रतिकारे चावहितोऽभवत् । यथा स्वर्गस्थः शक्रः जीवलोकस्य सुखावहः तथा विदुरो ऽपि पाण्डवानां नित्यं सुखावहः ।

स यदा तु विवृतैः संवृतैरपि विविधोपायैस्तान् दैव-भाव्यर्थ-रक्षितान् विनिहन्तुं नाशकत् ततो वृष-दुशासनादिभिः सचिवैः संमन्त्र्य धृतराष्ट्रमनुज्ञाप्य जातुपं गृहमादिशत् ।

सुतप्रियैषी राजा अम्बिकासुतो राज्य-भोग-बुभुक्षया तान् पाण्डवान् ततो विवासयामास । ते नागसाह्वयात् नगरात् सहिताः प्रातिष्ठन्त । प्रस्थाने च तेषां महात्मनां क्षत्ता मन्त्र्यभवत् । ततश्च महात्मानः परन्तपाः कौन्तेयाः

वारणावतं नगरं संप्राप्य धृतराष्ट्रेणाज्ञप्ताः मात्रा सह जातुषे गृहे पुरोचनाद्रक्षमाणाः अतन्द्रिताः संवत्सरमुषिताः। विदुरेण तु प्रचोदिताः सुरङ्गां कारयित्वा जातुषं वेश्ममादीप्य पुरोचनञ्चैव दग्ध्वा भयसंविग्नाः परन्तपाः मात्रा सह प्राद्रवन्। वन--निर्झर दारुणं दद्दशुः, तञ्च राक्षसेन्द्रं हत्वा समवबोधनात् भीताः धार्तराष्ट्रभयार्दिताः पार्थाः निशि संप्राद्रवन्।

ततः एकचक्रां गत्वा ते पाण्डवाःसंशितव्रताः वेदाध्ययनसम्पन्नाः ब्रह्मचारिणोऽभवन्। ते तत्रैकचक्रायां कंचिन्नियतं कालं मात्रा सह ब्राह्मणस्य निवेशने ऊषुः। तत्र वृकोदरो महाबाहु भीमसेनो महाबलं क्षुधितं बकं पुरुषादं आससाद। पुरुषव्याघ्रो वीरः पाण्डवस्तञ्चापि बाहुवीर्येण तरसा निहत्य नागरान् पर्यसान्त्वयत्।

ततस्ते कृष्णां पञ्चालेषु स्वयंवरां शुश्रुवुः। श्रुत्वा चैवाभ्यगच्छन्*। गत्वा चैव तामलभन्त। द्रौपदीं लब्ध्वा तेऽरिन्दमास्तत्र परिसंवत्सरोषिताः विदिताः हास्तिनपुरं प्रत्याजग्मुः।

ते राज्ञा धृतराष्ट्रेण, शान्तनवेन चोक्ताः-"तात। भ्रातृभिर्वो विग्रहो न भवेदिति खाण्डवप्रस्थे युष्मद्वासो

* अभ्यगच्छन्तःइत्यार्षः प्रयोगः

ऽस्माभिर् अनुचिन्तितः ।

तस्माद् गतमत्सराः जनपदोपेतं, सुविभक्त महापथं, खाण्डवप्रस्थं वासाय व्रजध्वम्* । तयोः वचनात् ते सर्वैः सुहृज्जनैः सह, सर्वशो रत्नान्यादाय खाण्डवप्रस्थं नगरं जग्मुः । तत्र ते पार्थाः शस्त्रप्रतापेनान्यमही-भृतः वशे कुर्वन्तोऽप्रमत्तोत्थिताः दान्ताः सत्यव्रतपरायणाः एवं धर्म-प्रधानाः बहून् अहितान् प्रतपन्तो बहून् संवत्सर-गणान् न्यवसन् । महायशाः भीमसेनस्तु प्राचीं दिशम्, वीरोऽर्जुन उदीचीं, तथा नकुलः प्रतीचीं, परवीरहा सहदेव-स्तु दक्षिणां विजिग्ये । एवं सर्वे इमां कृत्स्नां वसुन्धरां वशे चक्रुः । पञ्चभिः सूर्य-संकाशैः सत्यविक्रमैः पाण्डवैः सूर्येण च विराजमाना* पृथ्वी षट्सूर्येवाभवत् ।

ततः सत्यविक्रमी तेजस्वी धर्मराजो युधिष्ठिरः कस्मिं-श्चिन्निमित्ते प्राणेभ्योऽपि प्रियतरं, स्थिरात्मानं, गुणै-र्युतं, सव्यसाचिनं, पुरुषव्याघ्रं भ्रातरमर्जुनं वनं प्रस्था-पयामास । ततः स वै पूर्णं संवत्सरं मासं चैकं वने वसन् कथञ्चन द्वारवत्यां हृषीकेषम् अगच्छत् । तत्र बीभत्सुः वासुदेवस्यानुजां, राजीवलोचनां भद्रभाषिणीं सुभद्रां भार्यां लब्धवान् ।

---

* विराजती ६१—२४
* व्रज ६१—२२

सा सुभद्रा महेन्द्रेण संगता शचीव, कृष्णेन श्रीरिव पाण्डवेनार्जुनेन ह प्रीत्या युयुजे।

नृप-सत्तम वीभत्सुः कौन्तेयो वासुदेवेन सहितः खाण्डवे हव्यवाहनमतर्पयत्। व्यवसाय-सहायस्य विष्णोः शत्रुवधेष्विव पार्थस्य केशवेन सहातिभारो नाभवत्। अग्निः च पार्थायोत्तमं गाण्डीवं धनुः, अक्षयैः बाणैः इषुधी कपिलक्षणञ्च रथं ददौ। तत्र वीभत्सुर् महासुरं मयं मोक्षयामास। स सर्व-रत्न-समन्वितां दिव्यां सभां चकार।

ततः मन्दः सुदुर्मतिः दुर्योधनस्तस्यां लोभं चक्रे। ततः सौबलेन युधिष्ठिरमक्षैर्वञ्चयित्वा सप्त-वर्षाणि पञ्च च, एकं च राष्ट्रे ऽज्ञातं त्रयोदशं वर्षं वनं प्रस्थापयामास। ततश् चतुर्दशे वर्षे स्वकं वसु याचमानाः नालभन्त ततो युद्धमवर्तत।

ततस्ते पाण्डवाः क्षत्रमुत्साद्य, नृपं दुर्योधनं हत्वा विहत-भूयिष्ठं राज्यं प्रत्यपद्यन्त।

एवमेतत् पुरावृत्तं, तेषामक्लिष्ट-कर्मणाम्।
भेदो राज्य- विनाशाय, जयश्च जयतां वर॥

इति श्री महाभारते शतसाहस्र्यां संहितायां भारतसूत्रम्॥

# महाभरात प्रशंसा

जनमेजय उवाच—द्विजोत्तम! त्वया कुरूणां सर्वं महच् चरितम् महाभारतमाख्यानं समासेन वै कथितम्। तपोधन ! मे विस्तर-श्रवणेऽतीव कौतुहलं जातम्। अनघ। स भवान् चित्रार्थां कथामिमां विस्तरेण पुनराख्यातुमर्हति । पूर्वेषां महच्चरितं शृण्वन् * नहि तृप्यामि।

यत्र धर्मज्ञाः पाण्डवाः अवध्यान् सर्वशोजघ्नुः मानवैः च प्रशस्यन्ते, न वै तत्कारणमल्पम्! किमर्थं तेऽनागसो नरव्याघ्राः शक्ताः सन्तो दुरात्मनां प्रयुज्यमानान् संक्लेशान् क्षान्तवन्तः ? द्विजोत्तम! कथं वै नागायुत-प्राणो बाहुशाली वृकोदरः परिक्लिश्यन्नपि क्रोधं धृतवान्? कथं सा कृष्णा द्रौपदी दुरात्मभिः क्लिश्यमाना शक्ता सती क्रोध-चक्षुषा धार्तराष्ट्रान्नादहत् ? कथं पार्थौ माद्रीसुतौ नरव्याघ्रौ* दुरात्मभिः बाध्यमानौ* द्यूते व्यसिननं अन्वायाताम्* ? कथं धर्मभृतां श्रेष्ठो धर्मविद्, धर्मस्य सुतो युधिष्ठिरोऽनर्हः परमं क्लेशं सोढवान् ? कथं स कृष्णसारथिः

---

*नरव्याघ्राः, बाध्यमानाः अन्वयुः इति आर्षः प्रयोगः ६२—८ *शृण्वानः इत्यार्षः।

पाण्डवो धनञ्जया नैकोऽस्यन् सर्वाः बहुलाः सेनाः पितृलोकमनयत् ? तपोधन ! तत्र तत्र महारथाः यद्यत् कृतवन्तः यथावृत्तं सर्वमेतन्मे आचक्ष्व ।

वैशम्पायनउवाच — महाराज ! क्षणं कुरु । कृष्णद्वैपायेननेरितो विपुलोऽयमनुक्रमः ! पुण्याख्यानस्य वक्तव्यः ।

इदं हि वेदैः समितं पवित्रमपि चोत्तमम् ।
श्राव्याणामुत्तमं चेदं पुराणमृषिसंस्तुतम् ॥

अस्मिन् महापुण्ये इतिहासेऽर्थश्च कामश्च परिनैष्ठिकी बुद्धिश्च निखिलेनोपदेक्ष्यते । विद्वान् इमां कार्ष्णं वेदमृअक्षुद्रान् दानशीलान् सत्यशीलाननास्तिकान् श्रावयित्वार्थमश्नुते । यथा चन्द्रमा राहुणा (तथा) सर्वपापेभ्यो मुच्यते । अयं जयो नामेतिहासो विजगीषुणा श्रोतव्यः । राजा महीं विजयते । शत्रूंश्चापि पराजयेत* दं श्रेष्ठं पुंसवनम्, इदं महत्स्वस्त्ययनम्, तथा महीषीयुवराजाभ्यां बहुशः श्रोतव्यः श्रुत्वा पुत्रं वीरं जनयते, कन्यां वा राजभागिनीम् । इदं पुण्यं धर्मशास्त्रम्, इदं परमार्थशास्त्रम् इदं मोक्ष-शास्त्रम् इदं धन्यं यशस्यं पुण्यं तथैव च स्वर्ग्यं मोक्षशास्त्रं

*पराजयेत् इत्यार्षः प्रयोगः ६२—८

महात्मनां पाण्डवानाम् अन्येषां सर्व विद्याव-दातानां लोके प्रथितकर्मणां भूरि-द्रविण-तेजसां क्षत्रियाणां कीर्ति प्रथयता पुण्यचिकीर्षुणामितबुद्धिना कृष्णद्वैपायनेन व्यासेन प्रोक्तम् ।

भरतानां महज्जन्म महाभारतमुच्यते ।
भरतानां यतश्चायमितिहासो महाद्भुतः ॥

—※—

त्रिभिर्वर्षैःर्लब्ध-कामः कृष्णद्वैपायनो मुनिः ।
नित्योत्थितः शुचिः शक्तो महाभारतमादितः ॥
तपो नियममास्थाय कृतवानिदमद्भुतम् ।

तस्मान्नियमसंयुक्तै ब्राह्मणैरिदं श्रोतव्यम् । ये विप्रा मानवाश्च कृष्ण-प्रोक्तामिमां पुण्यां भारतीम् उत्तमां कथां श्रावयिष्यन्ति श्रोष्यन्ति च ते कृता-कृतैः वै वर्तमानाः सर्वथा न शोच्याः । धर्म-कामेन नरेणायमितिहासो निखिलेन सर्वः श्रोतव्यस्ततः सिद्धि मवाप्नुयात् । मानवो महापुण्यमितिहासं श्रुत्वैव तां तुष्टिमुपाश्नुते न यां स्वर्गगतिं प्राप्य ।

यथा समुद्रो भगवान्, यथा मेरुर्महान् गिरिः ।
उभौ ख्यातौ रत्न--निधी, तथा भारत-मुच्यते ।

परिक्षित ! मया कथ्यमाना हर्ष-करीमिमां दिव्यां कृत्स्नां कथां पुण्याय विजयाय च शृणु ।

भरतर्षभ धर्मे चार्थे च कामे मोक्षे च यदिहास्ति-
तदन्यत्रयन्नेहास्ति न तत्क्वचित् ।
इति श्री महाभारते शतसाहस्र्यां संहितायां महाभरत प्रशंसा ॥



# पुरुवंशानुकीर्तनम्

वैशम्पायन उवाच--राजन् ! पुरा मया सम्यक् द्वैपायानाच्छ्रुतं मया प्रोच्यमानं कृत्स्नं शुभं स्ववंशजननं शृणु ।

दक्षाद् अदितिः अदितेर्विवस्वान्, विवस्वतो मनुः, मनोर् इला, इलायाः पुरूरवाः, पुरूरवसः आयुः, आयुषो नहुषः; नहुषाद् ययातिः । ययातेः द्वे भार्ये बभूवतुः (१) उशनसो दुहिता देवयानी (२) वृषपर्वणश्च दुहिता शर्मिष्ठा नाम । देवयानी यदुं च तुर्वसुं चैव व्यजीजनत्* वार्षपर्वणी शर्मिष्ठा द्रुह्यं चानुं च पुरुञ्च । तत्र यदो र्यादवाः । पुरोः पौरवाः । पुरोस्तु भार्या कौसल्या नाम, तस्यामस्य जज्ञे जनमेजयो नाम । यस्त्रीनश्वमेधानाजहार, त्रिश्वजिता चेष्ट्वा वनं विवेश ।

जनमेजयः खल्वनन्तां नामोपयेमे माधवीम् । तस्याम् अस्य जज्ञे प्राचीन्वान्, यः प्राचींदिशं जिगाय, यावत्सूर्योदयात् ततस्तस्य प्राचिन्वत्त्वम् ।

प्राचिन्वान् खल्वश्मकीमुपयेमे यादवीम् । तस्याम् अस्य जज्ञे संयातिः । संयातिः खलु दृषद्वतो दुहितरं वराङ्गीं नामोपयेमे । तस्यामस्य जज्ञेऽहंयातिः ।

---

*व्यजायत इत्यकर्मकः प्रयोगः आर्षः ६५—६

अहंयातिः खलु कृतवीर्य-दुहितरमुपयेमे भानुमतीं तस्याम् अस्य जज्ञे सार्वभौमः । सार्वभौमः खलु जित्वा जहार सुनन्दां नाम । तामुपयेमे । तस्यामस्य जज्ञे जयत्सेनो नाम । जयत्सेनः खलु वैदर्भीमुपयेमे सुश्रवां नाम । तस्यामस्य जज्ञेऽर्वाचीनः । अर्वाचीनोऽपि वैदर्भीम् उपयेमे मर्यादां नाम । तस्यामस्य जज्ञेऽरिहः । अरिहः खल्वाङ्गीमुपयेमे सुदेवां नाम । तस्यां पुत्रम-न भक्तम । भक्तः खलु तक्षकदुहितरमुपयेमे ज्वा . । नाम । तस्यां पुत्रं मतिनारं नामोत्पादयामास ।

मतिनारः खलु सरस्वत्यां गुणसमन्वितं द्वादश वार्षिकं सत्रमाहरत् । समाप्ते च सत्रे सरस्वत्यभिगम्य तं भर्तारं वरयामास । स तस्यां पुत्रमर्जीजनत् तंसुं नाम । अत्रानुवंश-श्लोको भवति—

तंसुं सरस्वती पुत्रं मतिनारादजीजनद् ।
ईलिनं जनयामास कालिंग्यां तंसुरात्मजम् ।
ईलिनस्तु रथंतर्यां दुष्यन्ताद्यान् पञ्चपुत्रानजीजनत् ॥

दुष्यन्तः खलु विश्वामित्र-दुहितरं शकुन्तलां नामोपयेमे अस्यामस्य जज्ञे भरतः । अत्रानुवंशश्लोकौ भवतः—

[1] भस्त्रा माता, पितुः पुत्रो जातः स एव सः ।
भरस्व पुत्रं दुष्यन्त, मावमंस्थाः शकुन्तलाम् ॥

रेतो-धाः पुत्र उन्नयति नर-देव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य, सत्यमाह शकुन्तला ॥

ततोऽस्य भरतत्वम् । भरतः खलु काशेयीमुपयेमे । सार्वसेनीं सुनन्दां नाम । तस्यामस्य जज्ञे भुमन्युः । भुमन्युः खलु दाशार्हीमुपयेमे विजयां नाम । तस्यामस्य जज्ञे सुहोत्रः । सुहोत्रः खल्विक्ष्वाकु कन्यामुपयेमे सुवर्णां नाम तस्याम् अस्य जज्ञे हस्ती । य इदं हस्तिनापुरं स्थापयामास । एतदस्य हास्तिन-पुरत्वम् ।

हस्ती खलु त्रैगर्तीमुपयेमे यशोधरां नाम, तस्याम् अस्य जज्ञे विकुण्ठनो नाम । विकुण्ठनः खलु दाशार्हीम् उपयेमे सुदेवां नाम, तस्यामस्य जज्ञेऽजमीढो नाम ।

अजमीढस्य चतुर्विंशं पुत्रशतम् बभूव कैकेय्यां गान्धार्यां, विशालायां, ऋक्षायां चेति, पृथक् पृथग् वंशधराः नृपतयः । तत्र वंशकरः संवरणः । संवरणः खलु वैवस्वतीं तपतीं नामोपयेमे । तस्याम् अस्य जज्ञे कुरुः । कुरुः खलु दाशार्हीमुपयेमे शुभाङ्गीं नाम । तस्याम् अस्य जज्ञे विदूरथः । विदूरथस्तु माधवीमुपयेमे संप्रियां नाम । तस्यामस्य जज्ञेऽनश्वा नाम । अनश्वा खलु मागधीमुपयेमे अमृतां नाम तस्यां अस्य जज्ञे परिक्षित् । परिक्षित् खलु बाहुदाम् उपयेमे सुयशां नाम । तस्यामस्य जज्ञे भीमसेनः । भीमसेनः खलु

कैकेयीमुपयेमे कुमारीं नाम। तस्यामस्य जज्ञे प्रतिश्रवाः नाम। प्रतिश्रवसः प्रतीपः। प्रतीपः खलु शैब्याम् उपयेमे सुनन्दां नाम। तस्यां पुत्रानुत्पादयामास देवापिं शान्तनुं बाह्लीकं चेति।

देवापिः खलु बाल एवारण्यं विवेश। शान्तनुस्तु महीपालो बभूव। अत्रानुवंश-श्लोको भवति—

"यं यं कराभ्यां स्पृशति जीर्णं, स सुखमश्नुते पुनर्युवा च भवति। तस्मात्तं शांतनुं विदुः इति तदस्य शान्तनुत्वम्।

शान्तनुः खलु गंगां भागीरथीमुपयेमे। तस्यामस्य जज्ञे देवव्रतो नाम, यमाहुः भीष्ममिति। भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत्, यामाहुः गन्धकालीमिति। तस्यां पूर्वं कानिनो गर्भः पराशराद् द्वैपायनो ऽभवत्। तस्यामेव शान्तनोरन्यौ द्वौ पुत्रौ बभूवतुः। विचित्रवीर्यः चित्राङ्गदश्च। तयोरप्राप्तयौवनः एव चित्राङ्गदो गन्धर्वेण हतो, विचित्रवीर्यस्तु राजासीत्।

विचित्रवीर्यः खलु कौसल्यात्मजेऽम्बिकाम्बालिके काशिराज-दुहितरौ उपयेमे। विचित्रवीर्यस्तु अनपत्य एव विदेहत्वम् प्राप्तः। ततः सत्यवत्यचिन्तयत् मा दौष्यन्तो वंश उच्छेदं व्रजेदिति सा द्वैपायनमृषिं मनसा

चिन्तयामास । तस्याः पुरतः स्थितः किं करवाणीति। सा तमुवाच भ्राता तवानपत्य एव स्वर्यातो विचित्रवीर्यः साध्वपत्यं तस्योत्पादयेति। स तथेत्युक्त्वा त्रीन् पुत्रान्-उत्पादयामास धृतराष्ट्रं, पाण्डुं, विदुरञ्चेति ।

तत्र धृतराष्ट्रस्य राज्ञः पुत्रशतं बभूवुः तेषां धृतराष्ट्रस्य पुत्राणां चत्वारः प्रधानाः बभूवुः दुर्योधनो, दुश्शासनो, विकर्णश् चित्रकर्णश्चेति ।

पाण्डोस्तु द्वे भार्ये बभूवतुः, कुन्ती पृथा नाम, माद्रीचेत्युभे स्त्री-रत्ने। सा त्वं मदर्थे पुत्रानुत्पादयेति कुन्तीमुवाच। सा तथोक्ता पुत्रानुत्पादयामास। धर्माद् युधिष्ठिरं, मारुताद् भीमसेनं, शक्राद् अर्जुनमिति ।

तां संहृष्टः पाण्डुरुवाच इयं ते सपत्न्यनपत्या, साध्वस्याम् अपत्यमुत्पाद्यतामिति । माद्र्यां अश्विभ्यां नकुल-सहदेवौ उत्पादितौ तत्र द्रौपदीं भार्यामविन्दन् ।

कुशलिनः पुत्रांश्चोत्पादयामासुः। प्रतिविन्ध्यं युधिष्ठिरः, सुत-सोमं वृकोदरः, श्रुतकीर्तिमर्जुनः, शतानीकं नकुलः। श्रुत कर्माणं सहदेव इति ।

युधिष्ठिरस्तु गोवासनस्य शैव्यस्य देविकां नाम कन्यां स्वयंवराल्लेभे। तस्यां पुत्रं जनयामास यौधेयं नाम। भीमसेनोऽपि काश्यां बलन्धरां नामोपयेमे वीर्यशुल्काम्।

तस्यां पुत्रं सर्वगं नाम उत्पादयामास। अर्जुनः खलु द्वारवतीं गत्वा भगिनीं वासुदेवस्य सुभद्रां भद्रभाषिणीं भार्यामुदावहत्। स्वविषयञ्चाभ्याजगाम कुशली। तस्यां पुत्रमभिमन्युम् अतीव गुण-सम्पन्नं दयितं वासुदेवस्या जनयत्। नकुलस्तु चैद्यां करेणुवतीं नाम भार्यामुदावहत् तस्यां पुत्रं निरमित्रं नामाऽजनयत्। सहदेवोऽपि माद्रीमेव स्वयंवरे विजयां नामोपयेमे मद्रराजस्य द्युतिमतो दुहितरं, तस्याम् पुत्रं अजनयत् सुहोत्रं नाम। इत्येते पाण्डवानां पुत्रास्तेषां वंशकरोऽभिमन्युः।

स विराटस्य दुहितरमुपयेमे उत्तरां नाम तस्यामस्य परासु गर्भोऽभवत्। तमुत्संगेन प्रतिजग्राह पृथा, नियोगात् पुरुषोत्तमस्य वासुदेवस्य। षाण्मासिकं गर्भमहमेनं जीवयिष्यामीति।

स भगवता वासुदेवेनासंजात-बलवीर्य-पराक्रमोऽकाल-जातोऽस्त्राग्निना दग्धस्तेजसा स्वेन जीवितः। जीवयि-त्वा चैनमुवाच परिक्षीणे कुले जातो, भवत्वयं परिक्षिन्ना-मेति।

परिक्षित् खलु माद्रवतीं नामोपयेमे त्वन्मातरं तस्यां भवान् जनमेजयः। भवतो वपुष्टमायां द्वौ पुत्रौ जज्ञाते, शतानीकः शङ्कुकर्णश्च, शतानीकस्य वैदेह्यां पुत्र उत्पन्नोऽश्वमेधदत्त इति।

एष पुरोर्वंशः पाण्डवानाञ्च कीर्तितो धन्यः पुण्यः परम-पवित्रः ॥

इति श्री महाभारते शत-साहस्र्यां संहितायां पुरुवंशानुकीर्तनम् ।



# राज-राजेश्वरः शान्तनुः

वैशम्पायन उवाच—स राजा शान्तनुः धर्मात्मा, धीमान् देव-राजर्षि-सत्कृतः सर्व-लोकेषु सत्यवागिति विश्रुतः। पुरुषर्षभे महासत्वे शान्तनौ दमो, दानं, क्षमा, बुद्धि, ह्रीः, धृतिस्, तेज उत्तमम् नित्यान्यासन्। स एवं गुण सम्पन्नो धर्मार्थ-कुशलो नृपो भरतवंशस्य सर्व जनस्य च गोप्तासीत्। कम्बुग्रीवः पृथुव्यंसो मत्तवारण-विक्रमः परिपूर्णार्थैः सर्वैः नृपति-लक्षणैर् अन्वितः। नरास्तस्य कीर्तिमतः सततं वृत्तमवेक्ष्य कामादर्थाच्च धर्म एव पर इति व्यवस्थिताः। धर्मतश् च कश्चित् पार्थिवोऽस्य सदृशो न अभवत्। महीपाः धर्मेषु वर्तमानं, सर्व-धर्मम् भृतां वरं तं महीपालं राजराज्येऽभ्यषेचयन्।

भारतगोप्तारं पतिं (प्राप्य) भूमिपाः वीत शोक-भयबाधाः सुखस्वप्नविबोधनाः, शक्रप्रतिमतेजसः तेन कीर्तिमता (च) शिष्टाः भूमिपाः यज्ञदानक्रिया-शीलाः सम्पद्यन्त। तदा शान्तनु-प्रमुखैः नृपति-भिर् गुप्ते लोके नियमात् सर्व-वर्णानां धर्मोत्तर-मवर्त्तत।

ब्रह्म पर्यचरत् क्षत्रं, विशः क्षत्रमनुव्रताः।
ब्रह्म क्षत्रानुरक्तश्च शूद्राः पर्यचरन् विशः॥

स कुरूणां पुट-भेदने रम्ये हास्तिनापुरे वसन् सागरपर्यन्तां वसुन्धराम् अन्वशासत्। सोमवत् प्रिय

दर्शनः सः देव-राजसदृशो धर्मज्ञः, सत्यवाग् ऋजुः, दान-धर्म-तपो-योगात् श्रिया परमया युतः, अराग-द्वेष-संयुक्तः, तेजसा सूर्यकल्पो, जवे वायुवेगसमः, कोपेऽन्तक-प्रतिमः, क्षमया पृथिवी-समोऽभूत् ।

नृप ! शान्तनौ पृथिवीपाले मृगपक्षिणां तथैव पशुवराहाणां वधो नावर्त्तत । शान्तनुर् विनयात्मवान् काम-राग-विवर्जिता ब्रह्म—धर्मोत्तरे राज्ये भूतानि समं शशास । तदा क्रियाः देवर्षि-पितृ-यज्ञार्थमारभन्त । न चाधर्मेण केषांचित् प्राणिनां वधोऽभवत् । स एव राजा असुखानाम् अनाथानां तिर्यग्योनिषु वर्तमानानाम्* भूतानां पिता अभवत् । तस्मिन् राजराजेश्वरे कुरुपतिश्रेष्ठे सति वाक् सत्यं श्रिता, मनः ( च ) दानधर्माश्रितम् अभवत् ।

सः षोडशाष्टौ तथा च अपराश् चतस्रोऽष्टौ समाः स्त्रीषु रतिमप्राप्नुवन् वन-गोचरो बभूव ।

तथारूपस् तथाचारस् तथावृत्तस् तथाश्रुतो वसुः नाम्ना देवव्रतो गाङ्गेयस् तस्य पुत्रोऽभूत् । वीर्यवान् एष वसिष्ठात् साङ्गान् वेदान् अधिजगे । कृतास्त्रः परमेष्वासो, युधि देवराजसमः सुराणाम्

---

* वर्ततताम् इत्यार्षः प्रयोगः (१००-१८)

असुराणां च नित्यं सम्मतोऽभवत् । उशनाः यत् शस्त्रं वेद अयं तत् सर्वशो वेद । तथैव सुरासुरनमस्कृतः आङ्गिरसः पुत्रो यच् छास्त्रं वेद तच्चापि कृत्स्नमस्मिन् प्रतिष्ठितम् ।

सर्वास्त्रेषु निष्णातः, इतरेषु पार्थिवेषु च महाबलो महासत्त्वो, महावीर्यो, महारथः स शान्तनुर् नृपः कदाचिन्मृगं विद्ध्वा गङ्गाम् नदीमनुसरन् भागीरथीम् अल्पजलां दृष्टवान् । तां दृष्ट्वा पुरुषर्षभः शान्तनुश्चिन्तयामास-'इयं श्रेष्ठा सरित् अद्य यथापुरा किन्तु न स्यन्दते" ।

ततः स महामनाः निमित्तम् अन्विच्छन् बृहन्तम् यथा देव-पुरन्दरम् दिव्यवास्त्रं विकुर्वाणं, तीक्ष्णैश् शरैः कृत्स्नां गंगां समावृत्यावस्थितं, चारुदर्शनं, रूपसम्पन्नं कुमारं ददर्श । अतिमानिषं कर्म-तां गंगां नदीं तदन्तिके शरैराचितां दृष्ट्वा राजा विस्मितोऽभवत् । धीमान् शान्तनुस्तदा जातमात्रं पुरा दृष्ट्वा तमात्मजम् अभिज्ञातुं स्मृतिं नोपलेभे । स तु तं पितरं दृष्ट्वा मायया मोहयामास । ततः संमोह्य क्षिप्रं तत्रैवान्तरधीयत ।

स राजा शान्तनुस् तद् अद्भुतं दृष्ट्वा, सुतं शंकमानो १* ( वसिष्टमभिगम्य ) अब्रवीत्—दर्शयेति ह !

* गंगाम् इति पाठस्तु (उद्वेगकरः) अप्राकृतः ॥३०॥

वसिष्ठ उवाच—

पुरुष व्याघ्र! स चायम् सर्वास्त्रवित्। अनुत्तमः। महाराज! मया संवर्धितं सुतमिमं गृहाण। विभो! एनमादाय, गृहं नय। परैरनाधृष्यो जामदग्न्यः प्रतापवान् ऋषिः रामश्च यद्यदस्त्रं वेद तदेतस्मिन् प्रतिष्ठितं। वीरवर! राजन्! राजधर्मार्थ-कोविदं महेष्वासम् इमं पुत्रं मया दत्तं गृहं नय।

वैशम्पायन उवाच——एवं समनुज्ञातः शान्तनुः पुत्रमादाय यथादित्यं भ्राजमानः स्व-पुरं-ययौ। स पौरवः पुरन्दरपुरोपमां पुरीं गत्वात्मनात्मानं सर्व-काम-समृद्धार्थं मेने। ततो अभयप्रदं गुणवन्तं महात्मानं पुत्रं पौरवेषु यौवराज्येऽभ्यषेचयत्।

भरतर्षभ! महायशाः शान्तनोः पुत्रः पौरवान् पितरञ्च राष्ट्रं च वृत्तेन रञ्जयामास। स अमितविक्रमो महीपतिस् तथा पुत्रेण सह रममाणश्चत्वारि वर्षाणि वर्तयामास।

स महीपतिः कदाचिद् यमुनां नदीमभितो वनं यातोऽनिर्देश्यमुत्तमं गन्धम् अजिघ्रत्। तस्यप्रभवमन्विच्छन् समन्ततो विचचार। तदा स दाशानां देवरूपिणीं कन्यां ददर्श। स दृष्ट्वैव तामसितलोचनां कन्यामपृच्छत्—"कस्य

त्वम् असि ? का चासि ? किञ्च भीरु ! चिकीर्षसि ?

सा अब्रवीत्--"दाशकन्यास्मि महात्मनो दाशराज्ञः पितुर्नियोगात् धर्मार्थं तरीं वाहये ! भद्रं ते !"

राजा शान्तनुस् तां देव-रूपिणीं रूपमाधुर्य-गन्धैस् संयुक्तां दाशेयीं समीक्ष्य कामयामास। तदा स तस्याः पितरं गत्वा वरयामास। ततस् तस्याः पितरम् आत्मकारणात् पर्यपृच्छत्।

स दाशराजो महीपतिं तमिदं प्रत्युवाच-"जातमात्रैव वर-वर्णिनी मे वराय देया। जनेश्वर ! मे हृदि कश्चित् कामस्तं निबोध। अनघ ! यदि त्वमिमां धर्मपत्नीं मत्तः प्रार्थयसे, सत्येन मे समयं कुरु। सत्यवाग् असि। नृप। अहमिमां कन्यां ते समयेन प्रदद्याम्। न हि मे त्वत्समो वरो जातु कश्चिद् भविष्यति।"

शान्तनुरुवाच-"दाश ! तव वरं श्रुत्वाहं व्यवस्येयम्। दातव्यं चेत्प्रदास्यामि। न त्वदेयं कथंचन।"

दाशउवाच-"पृथिवीपते। अस्यां यः पुत्रः जायेत, त्वदूर्ध्वं स राजा अभिषेक्तव्यो, नान्यः कश्चन।

वैशम्पायन उवाच-"भारत ! तीव्रेण शरीरजेन दह्यमानोऽपि शान्तनुस् तं वरं दाशाय दातुं नाकामयत्। तदा स महीपतिः कामोपहत-चेतनो दाशकन्यां चिन्तयन्

न्नेव हास्तिनपुरं प्रत्यायात्।

ततः कदाचित् पुत्रो देवव्रतः शोचन्तं ध्यानमास्थितं शान्तनुं पितरमभ्येत्य वाक्यमब्रवीत्—"सर्वपार्थिवैः*१। सर्वतो भवतः क्षेमं विधेयम्*२। तत् किमर्थं दुखितो ऽभीक्ष्णं दुखितः परिशोचसि। राजन्; किंचन ध्यायन्निव च माम् अभिभाषसे*३ न चाश्वेन विनिर्यासि। त्रिवर्णो! हरिणः!! कृशः!!! ते व्याधिं ज्ञातुम् इच्छामि। तत्र हि प्रतिकुर्यावै।"

पुत्रेण एवमुक्तः स शान्तनुः प्रत्यभाषत—"वत्स। असंशयं यथा ध्यानपरस् तथा शृणु। भारत! त्वमेव नः महति कुले एकोऽपत्यम्। शस्त्रनित्यश्च सततं पौरुषे पर्यवस्थितः। पुत्रक! लोकानामनित्यतां चानुशोचामि। गांगेय! कथंचित् तव विपत्तौ नः कुलं नास्ति। असंशयं त्वमेवकः शतादपि वरः सुतः। न चाप्यहं भूयो वृथा दारान् कर्तुमिहोत्सहे। कामये सन्तानस्याविनाशाय।

ते भद्रमस्तु! धर्मवादिनोऽनपत्यं त्वेकपुत्रम् इत्याहुः।
अग्निहोत्रं त्रयीविद्यां सन्तामपि चाक्षयम्।
सर्वाण्येतान्यनपत्यस्य कलां नार्हन्ति षोडशीम्॥
(१००—६७)

*१ सर्व पार्थिवा इति आर्षः प्रयोगः १००—६०
*२ विधेया इत्यार्षः प्रयोगः ,, ,,
*३ अभिभाषसि ,, १००—६१

एतदेवम् मनुष्येषु, तच्च सर्वं प्रजासु। महाप्राज्ञ! यदपत्यं तत्र मे संशयो नास्ति। एषा त्रयी पुराणानां, देवतानां च शाश्वती (मतिः)।

भारत! त्वं च शूरः, सदामर्षी, शस्त्रनित्यः च तस्मात्ते निधनं युद्धादन्यत्र न क्वचिद् विद्यते। सोऽस्मि संशयमापन्नः, त्वयि शान्ते कथं भवेत् इति कारणं दुःखस्य तात ते ऽशेषतः उक्तम्।

वैशम्पायन उवाच—"ततो राज्ञस्तत् सर्वमशेषतः कारणं ज्ञात्वा महाबुद्धिः देवव्रतः प्रज्ञया चान्वचिन्तयत् तदैवाशु पितुर्हितम् वृद्धामात्यमभ्यगच्छत्। तदा तमभ्येत्य पितुः शोक-कारणम् अपृच्छत्!

भरतर्षभ! यथावत् परिपृच्छते तस्मै कुरुमुख्याय तां कन्यामुद्दिश्य वरं शशंस।

ततो वृद्धैः क्षत्रियैस् सहितो देवव्रतो दाशराजम् अभिगम्य पित्रे*स्वयं कन्यां वव्रे।

दाशो विधिवत् प्रतिपूज्य तं प्रतिजग्राह। भारत! राजसंसदि चैनमासीनम् अब्रवीत्—"भरतर्षभ। शान्तनोस्त्वमेव शस्त्रभृतां श्रेष्ठः पुत्रो नाथः पर्याप्तः। किन्तु ते वचो वक्ष्यामि। को हि साक्षादपि शतक्रतुः श्लाघ्यमीप्सितमीदृशं यौनं सम्बन्धकम् अतिक्रामन्

* पितुः इत्यार्षः प्रयोगः १००-७५

न तप्येत। एतदपत्यं चार्यस्य । यस्य शुक्रात् वरवर्णिनी सत्यवती संभूता स*युष्माकं गुणैः समः। तात! तेन मया* बहुशस्ते पिता परिकीर्तितः, स नराधिपो धर्मज्ञः सत्यवतीं वोढुमर्हः । पुरा मया देवर्षिः असितो ऽपि प्रत्याख्यातः। स हि ऋषिसत्तमः सत्यवत्या भृशं चार्थी आसीत् । नराधिप! कन्यापितृत्वात् त्वां किञ्चित्तु वक्ष्यामि "अत्र केवलं बलवत्सपत्नतां दोषं पश्यामि। यस्य हि गन्धर्वस्य असुरस्य वा सपत्नः स्यात् त्वं। परन्तप! त्वयि क्रुद्धे न स जातु चिरं जीवेत् । पार्थिव! दानादाने एतावानत्र दोषो, नान्यः कश्चन। एतज् जानीहि। परन्तप! भद्रम् ते !!

वैशम्पायन उवाच—"भारत! एवमुक्तस्तु गाङ्गेय पितुरर्थाय भूमिपालानां शृण्वतां तद्युक्तं प्रत्यभाषत।" सत्यवतां वर! इदं मे सत्यं व्रतमादत्स्व। नैव जातो न वाजात ईदृशं वक्तुमुत्सहेत*।

एवमेतत् करिष्यामि, यथा त्वमनुभाषसे ।
योऽस्यां जनिष्यते पुत्रः, स नो राजा भविष्यति ॥
१००–८७

भरतर्षभ! अथ राज्यार्थे दुष्करं कर्म चिकीर्षुः दाशः

---

* य इति गद्यानुपयोगी पाठः। १००–७६
* मे इति तु आर्षः। १००–८०
* उत्सहेत् ,, १००–८३

इत्युक्तः पुनरेव प्रत्यभाषत—"धर्मात्मन् । अमितद्युतेः शान्तनोस्त्वमेव नाथः संप्राप्तः, कन्यायाश्चैव दानाय प्रभुरीश्वरश्च । सौम्य ! इदं तु वचनं कार्यं चैत्र मे निबोध । अरिंदम ! कौमारिकाणां शिलेनाहं वक्ष्यामि । सत्यधर्मपरायण ! सत्यव्रत्यर्थे यत्त्वया राजमध्ये प्रतिज्ञातं तत् तवैवानुरूपम् । महाबाहो ! तन्नान्यथा । नात्र कश्चन संशयः । यत्तु तवापत्यं भवेत् तत्र नः संशयो महान् !

वैशम्पायन उवाच—"राजन् ! सत्यधर्मपरायणस् तस्यैतन्मतमाज्ञाय तदा पितुः प्रियचिकीर्षया प्रत्यजानात् !

गांगेय उवाच—"नृपोत्तम ! दाशराज ! शृण्वतां भूमिपालानां यद्ब्रवीमि तन्मे वचनमिदं पितुः कृते निबोध ।

राज्यं तावत् पूर्वमेव मया त्यक्तम् नराधिपाः ।
अपत्य-हेतोरपि च करिष्ये, ऽद्य विनिश्चयम् ॥
अद्य प्रभृति मे दाश ! ब्रह्मचर्यं भविष्यति ।
अपुत्रस्यापि मे लोकाः भविष्यन्त्यक्षया दिवि ॥

१००-६५-९६-

वैशम्पायन उवाच—तस्य तद्वचनं श्रुत्वा संप्रहृष्ट-तनूरुहः । धर्मात्मा दाशः तं प्रत्यभाषत-ददानिइत्येक । ततोऽ

❀ कुसुमैरिति तु आर्ष : विभक्ति प्रयोग : । १००- ६८
❀ शान्तनो : ,, ,, ,, । १०० -१००

प्सरसो देवाः सर्षिगणाः अन्तरिक्षे कुसुमानि* अभ्यवर्षन्त भीष्मोऽयमिति च अब्रुवन् ।

ततः स पितुरर्थाय तां यशस्विनीमुवाच--"मातः ! रथमधिरोह । स्वगृहान् गच्छावः ।" इति

वैशम्पायन उवाच—भीष्मस् ताम् भाविनीमेवमुक्त्वा रथमारोप्य, हास्तिनपुरमागम्य शान्तनवे* सन्न्यवेदयत् । नराधिपास्तस्य दुष्करं तत्कर्म प्रशशंसुः । समेताः पृथक् चैव भीष्मोऽयमित्यब्रुवन्

शान्तनुः भीष्मेण तद् दुष्करं कर्म कृतमिति श्रुत्वा, तुष्टस् तस्मै महात्मने स्वच्छन्द मरणं ददौ--

न ते मृत्युः प्रभविता, यावज्जीवितुमिच्छसि ।
त्वत्तोह्यनुज्ञां संप्राप्य मृत्युः प्रभवितानघ ॥

इति श्री महाभारते शतसाहस्र्यां राजराजेश्वरः शान्तनुः ।



* कुसुमैः इत्यार्ष विभक्ति प्रयोगः १००/७६
* 'शान्तनोः' इत्यार्ष प्रयोगा १००।१००

# वीरः चित्राङ्गदः

वैशम्पायन उवाच--ततो विवाहे निवृत्ते, स राजा शान्तनुः तां रूपसम्पन्नां कन्यां स्वगृहे सन्न्यवेशयत्। ततः शान्तनवो वीरश्चित्राङ्गदो नाम वीर्यवान् पुरुषेश्वरो धीमान् सत्यवत्यां अजायत।

अथ अपरं महेष्वासं राजानं विचित्रवीर्यं सुतं वीर्यवान् प्रभुः सत्यवत्यां जनयामास। स धीमान् राजा शान्तनुः तस्मिन् तु पुरुषर्षभे यौवनमप्राप्तवति काल-धर्मम् उपेयिवान्।

शान्तनौ स्वर्गते सत्यवत्याः मते स्थितो भीष्मश्चित्राङ्गदम् अरिंदमं वै राज्ये स्थापयामास।

स तु चित्राङ्गदः शौर्यात् सर्वान् पार्थिवान् चिक्षेप। स हि कञ्चित् मनुष्यमात्मनः सदृशं न मेने। तदा सुरान् मनुष्यान् चैव, तथा असुरान् क्षिपन्तं तुल्यनामा बलवान् गन्धर्वराजो अभ्ययात्। कुरुक्षेत्रे हतेनास्य सुमहद् युद्धं बभूव। तत्र सरस्वत्या नद्याः तीरे तिस्रः समाः तयोः बलवतोः गन्धर्वकुरुमुख्ययोः रणोऽभवत्।

तस्मिन् शस्त्र-समाकुले तुमुले विमर्दे मायाधिको गन्धर्वो वीरं कुरुसत्तममवधीत्। ततः स गन्धर्वोऽरिंदमं चित्राङ्गदं नरश्रेष्ठं हत्वा अन्ताय कृत्वा दिवम् आचक्रमे।

तस्मिन् भूरितेजसि पुरुष-शार्दूले, निहते राजा शान्तनवो भीष्मः प्रेत कार्याणि अकारयत् ।

तदा अनन्तरम् प्राप्त-यौवनं बालं विचित्रवीर्यं महाबाहुः कुरुराज्येऽभ्यषिञ्चत् । महाराज ! तदा स विचित्रवीर्यो भीष्मस्य वचने स्थितः पितृपैतामहं पदम् अन्वशासत् । स नृपो धर्मशास्त्र-कुशलं शान्तनवं भीष्मं पूजयामास, स च धर्मेण एनं प्रत्यपालयत् ।

इति श्री महाभारते शतसाहस्र्यां वीरश्चित्राङ्गदः ॥



# पृथिवी-पतिः विचित्रवीर्यः

वैशम्पायन उवाच–कौरव ! बाले भ्रातरि चित्राङ्गदे हते सत्यवत्या मते स्थितो भीष्मः तद्राज्यं पालयामास। धीमतां वरः भ्रातरं संप्राप्तयौवनं दृष्ट्वा (तस्य) विचित्र-वीर्यस्य विवाहाय मतिमकरोत्।

राजन् ! अथ भीष्मः काशिपतेः अप्सरोपमास् तिस्रः कन्याः सहिताः स्वयंवरं वै वृण्वानाः शुश्राव। ततः सः प्रभुः रथिनां श्रेष्ठः, शत्रुजित्, मातुः अनुमतो * वाराणसीं पुरीं जगाम।

शान्तनुनन्दनः भीष्मः तत्र सर्वतः समुदितान् समुपागतान् राज्ञः, ताः कन्याः चैव ददर्श। तदा तु राज्ञां नामसु सर्वशः कीर्त्यमानेषु, ताः सर्वाः परमशोभनाः कन्याः तम् एकाकिनं वृद्धं, भीष्मं शान्तनुनन्दनं दृष्ट्वा, 'वृद्ध' इत्येव चिन्तया सोद्वेगा इव अपाक्रामन्त। ते नृपाधमाः—"वृद्धः परमधर्मात्मा वलीपलितधारणो भरतर्षभः किं कारणमिहायातो निर्लज्जः ?भारत ! मिथ्याप्रतिज्ञो लोकेषु किं वदिष्यति। भीष्मो ब्रह्मचारी इति हि वृथैव प्रथितो भुवि" इत्येवं ब्रुवन्तो हसन्ति स्म।

---

* अनुमते इति तु कवि सम्मतः पाठः। १०२।४

वैशम्पायन उवाच—भारत ! क्षत्रियाणां वचः श्रुत्वा भीष्मः चुक्रोध । तदा प्रभुः भीष्मः ताः कन्याः वरयामास । राजन् ! जलदनिस्स्वनो भीष्मः, प्रहरतां वरः ताः कन्याः रथम् आरोप्य महीपालान् च उवाच—

"(१) आहूय दानं कन्यानां गुणवद्भ्यः स्मृतं बुधैः ।
(२) अलंकृत्य यथाशक्ति प्रदाय च धनान्यपि ॥
(३) प्रयच्छन्त्यपरे कन्यां मिथुनेन गवामपि ।
(४) वित्तेन कथितेनान्ये, (५) बलेनान्येऽनुमान्य च ॥
(६) प्रमत्तामुपयन्त्यन्ये, (७) स्वयमन्ये च विन्दते ।
(८) आर्षविधिं पुरस्कृत्य दारान् विन्दन्ति चापरे ॥
अष्टमं तमथो वित्त विवाहं कविभिर्वृतम् ॥

अ० १०२ श्लो० १२-१५

राजन्याः स्वयंवरं प्रशंसन्ति उपयान्ति च । धर्मवादिनः प्रमथ्य तु हृतां ज्यायसीमाहुः । पृथिवीपालाः ! ता इमा बलाद् इतः जिहीर्षामि । ते (यूयं) विजयाय इतराय वा परं शक्त्या यतध्वम् । पृथिवीपालाः ! युद्धाय कृतनिश्चयःस्थितोऽहम् ।" वीर्यवान् सः कौरव्यो महीपालान् काशिराजं च एवमुक्त्वा, ताः सर्वाः कन्याः प्रगृह्य स्वकं च रथमारोप्य, तान् च आमन्त्र्य शीघ्रं प्रायात् ।

ततः ते सर्वे पार्थिवाः अमर्षिताः स्वकान् बाहून्

संस्पृशन्तो, दशनच्छदान् दशंतः समुत्पेतुः। तेषां त्वरितानाम्, आशु आभरणानि विमुञ्चतां, वर्माणि च अमुञ्चतां सुमहान् संभ्रमोऽभूत्। जनमेजय! सवर्मभिः भूषणैश्च इतस्ततः प्रकीर्यद्भिः भूषणानां, सर्वेषां च कवचानां सर्वशः ताराणामिव संपातो बभूव।

अथ सर्व प्रहरणान्विताः ते वीराः सक्रोधामर्षजिह्मभ्रू-कषायीकृतलोचनाः सूतोपक्लृप्तान् अश्वैरुपकल्पितान् रुचिरान् रथानास्थायोदायुधाः प्रयान्तं कौरव्यम् अनुसस्रुः।

भारत! ततः एकस्य तस्य, बहूनां च तेषां तुमुलं लोमहर्षणं युद्धं समभवत्। ते तु युगपत् तस्मिन् दशसाहस्रान् इषून् आक्षिपन्। भीष्मः आशु लोमवाहिना महता शरवर्षेण सर्वान् तान् अप्राप्तान् चैव तथान्तरा अच्छिनत्।

ततस्ते सर्वे पार्थिवाः अम्बुदाः वर्षेणेवाद्रिं तं सर्वतः परिवार्य शरवर्षेण ववृषुः। ततः स सर्वतः तं बाणमयं वर्ष-शरैः आवार्य सर्वान् महीपालान् त्रिभिस्त्रिभिः (बाणैः) पर्यविध्यत्। राजन्! ततः एकैकस्तु भीष्मं पञ्चभिः विव्याध। स च तान् पराक्रमान् द्वाभ्यां द्वाभ्यां प्रति-विव्याध। पश्यतां लोकवीराणां देवासुरोपमं तद्युद्धं शरशक्तिसमाकुलं, घोरं, तुमुलञ्च आसीत्। स भीष्मः समरे

शतशोऽथ सहस्रशो धनूंषि, ध्वजाग्राणि, वर्माणि, शिरांसि च चिच्छेद । रथचारिणः शत्रवोऽपि संख्ये तस्यात्मनो रक्षणं, अन्यान् अतिपुरुषान् लाघवं च अभ्यपूजयन् ।

सर्वशस्त्र-भृतां वरो भारतो रणे तान् विनिर्जित्य कन्याभिः सहितः भारतान् प्रतिप्रायात् ।

राजन् ततो महारथोऽमेयात्मा शाल्वराजः पृष्ठतो रणे शान्तनवं भीष्मम् अभ्यगच्छत् । अयथापरो बलिनां वरो यूथपः वासितामनुसंप्राप्तो दन्ताभ्यां वारणं जघने भिन्दन् (तथा) स्त्रीकामः सः महाबाहुः, अमर्षेण प्रचोदितःशाल्वराजः पार्थिवः तिष्ठ तिष्ठेति भीष्ममाह- ततः परबलार्दनः पुरुषव्याघ्रः स भीष्मः क्रोधाद् विधूमो ऽग्निरिव ज्वलन्, तद्वाक्याकुलितो, विततेषु-धनुष्पाणिः विकुञ्चितललाटभृत्, व्यपेतभयसंभ्रमो, महारथः क्षत्रधर्मं समास्थाय शाल्वं रथं प्रतिनिवर्तयामास । सर्वे एव ते राजानो निवर्तमानं तं दृष्ट्वा, भीष्म-शाल्व-समागमे प्रेक्षकाः समपद्यन्त । तौ बलविक्रमशालिनौ वासितान्तरे नर्दन्तौ बलिनौ वृषौ इव अन्योऽन्यम् अभिवर्तेताम् । ततो नरश्रेष्ठः शाल्वराजः शान्तनवं भीष्मं शतसहस्रशः आशुगैः शरैः समवाकिरत् । पूर्वं ते नृपाः भीष्मं शाल्वेन अभ्यर्दितं दृष्ट्वा विस्मिताः समपद्यन्त, साधु साधु च अब्रुवन् । ते

ते सर्व-पार्थिवाः समरे तस्य लाघवं दृष्ट्वा संहृष्टाः शाल्वं नराधिपं वाग्भिः अपूजयन्त । ततः क्षत्रियाणां वचः श्रुत्वा परपुरञ्जयः शान्तनवो भीष्मः क्रुद्धः तिष्ठ तिष्ठ इत्यभाषत । क्रुद्धः च सारथिमब्रवीत्—"याहि यत्रैष पार्थिवः । यावत् पक्षिराड् भुजङ्गम् इव एनम् अद्य निहन्मि ।

ततः कौरवो वारुणमस्त्रं सम्यग् योजयामास । तेन भूपतेः शाल्वराजस्य चतुरो ऽश्वान् अमृद्नात् । नृपति-शार्दूल ! कौरवो भीष्मः शाल्वराजस्यास्त्राणि अस्त्रैः संवार्य तस्य सारथिं न्यवधीत् । तदा नरश्रेष्ठः शान्तनवो भीष्मः कन्या-हेतोः ऐन्द्रेण अस्त्रेण तुरगोत्तमान् अपि न्यवधीत् । जीवन्तं नृपसत्तमं जित्वा विसर्जे-यामास ।

भरतर्षभ ! ततो नृपतिः शाल्वः स्वनगरं प्रययौ । तदा च स्वराज्यं धर्मेण अन्वशासत् । तत्र च ये राजानः स्वयंवरदिदृक्षवः आसन् तेऽपि परपुरंजयाः स्वान्येव राष्ट्राणि जग्मुः ।

प्रहरतां वरो भीष्मः एवं ताः कन्याः विजित्य हास्तिनपुरं प्रययौ । यत्र स राजा कौरवो धर्मात्मा विचित्रवीर्यः इमां वसुधां प्रशास्ति यथास्य पिता कौरव्यो नृपसत्तमः शान्तनुः ।

नराधिप ! सः अचिरेणैव कालेन वनानि, विविधान्-द्रुमान् सरितः चैव, शैलान् चैव, अत्यक्रामत् ।

सागरगा-सुतो असंख्येय-विक्रमः संख्येऽक्षतोऽरीन् क्षपयित्वा काश्यस्य सुताः आनयामास । सः धर्मात्मा स्नुषा इव, अनुजाश्च भगिनीरिव, यथा दुहितरश्च परिगृह्य कुरून् ययौ । स महाबाहुः भ्राता भ्रातुः प्रियचिकीर्षया यवीयसे भ्रात्रे विक्रमाहृताः ताः सर्वगुण-सम्पन्नाः आनिन्ये विचित्रवीर्याय च प्रददौ ।

धर्मज्ञः धर्मेण एवम् अतिमानुषं कर्मकृत्वा, सत्यवत्या सह मिथो निश्चयं कृत्वा, आत्मनो भ्रातुः विचित्र-वीर्यस्य विवाहाय उपचक्रमे । तदा तासां ज्येष्ठा काशिपतेः सुता विवाहं कारयिष्यन्तं भीष्मं हसति इदं वाक्यमब्रवीत् "मया पूर्वं सौभपतिः मनसा हि पतिः वृतः, तेन च वृतास्मि, एष कामश्च मे पितुः । तस्मिन् स्वयं-वरे मया शाल्वो वरयितव्योऽत्र् , धर्मज्ञ ! एतद्विज्ञाय धर्मतत्त्वं समाचर ।"

विप्रसंसदि तया कन्यया एवम् उक्तो वीरो भीष्मस् तस्यैव कर्मणो युक्तां चिन्तामभ्यगमत् । स वेदपारगैः ब्राह्मणैः धर्मज्ञो विनिश्चित्य काशीपतेः ज्येष्ठां सुताम् अम्बाम् अनुजज्ञे । विधिदृष्टेन कर्मणा (च) भीष्मो विचित्रवीर्याय यवीयसे भ्रात्रे अम्बिकाम्बालिके प्रादात् ।

रूपयौवनदर्पितो विचित्रवीर्यः तयोः पाणी गृहीत्वा तु धर्मात्मा कामात्मा समपद्यत ।

ते चापि नीलकुञ्चितमूर्धजे, रक्ततुङ्गनखोपेते, पीनश्रोणिपयोधरे, बृहती श्यामे, आत्मनः प्रतिरूपोऽसौ पतिः इति स्थिते, शुभे, कल्याण्यौ विचित्रवीर्यं पूजयामासतुः ।

स च अश्विरूप-सदृशो, देवतुल्यपराक्रमो रहः सर्वासामेव नारीणां चित्तप्रमथनः । पृथिवीपतिः विचित्र-वीर्यः तरुणः ताभ्यां सह सप्तसमा विरहन् यक्ष्मणा समपद्यत । चिकित्सकैः सह सुहृदां यतमानानाम् अस्तम् इव आदित्यः कौरव्यः यमसादनं जगाम ।

चिन्ता शोकपरायणो धर्मात्मा गाङ्गेयः सत्यवत्या मते स्थितः ऋत्विग्भिः सर्वैः कुरुपुङ्गवैश्च सहितः तस्य राज्ञो विचित्रवीर्यस्य सर्वाणि प्रेतकार्याणि सम्यग-कारयत् ।

इति श्री महाभारते शतसाहस्र्यां पृथिवी-पतिः विचित्रवीर्यः ।

—::००::—

# विचित्रवीर्यस्य सुतोत्पत्तिः

भारत ! ततो दीना, पुत्रगृद्धिनी, कृपणा सत्यवती स्नुषाभ्यां पुत्रस्य कर्माणि कृत्वा, ते स्नुषे, शस्त्रभृतां वरं भीष्मं च समाश्वास्य महाभागा भाविनी धर्मं च पितृवंशं च मातृवंशं च प्रसमीक्ष्य गाङ्गेयं वाक्यमब्रवीत्—'कौरव्यस्य, यशस्विनो धर्मनित्यस्य शान्तनोः कीर्तिः, सन्तानं त्वयि प्रतिष्ठितम् । शुभं कर्म कृत्वा यथा स्वर्गोपगमनं ध्रुवं यथा च सत्ये ध्रुवमायुः, तथा त्वयि धर्मो ध्रुवः । धर्मज्ञ ! त्वं समासेन इतरेण च धर्मान् वेत्थ, विविधाः श्रुतीः, वेदाङ्गानि च सर्वशो वेत्थ । ते धर्मे व्यवस्थानं, कुलाचारं, कृच्छ्रेषु शुक्राङ्गिरसयोरिव प्रतिपत्तिं च लक्षये । धर्मभृतां वर ! तस्मात् त्वयि सुभृशमाश्वस्य त्वां कार्ये विनियोक्ष्यामि तत् श्रुत्वा कर्तुमर्हसि । पुरुषर्षभ ! ते सुप्रियः भ्राता, मम पुत्रो वीर्यवान् बाल एव अपुत्रः स्वर्गं गतः । भारत ! इमे शुभे काशिराजसुते ते भ्रातुः महिष्यौ रूपयौवनसम्पन्ने, पुत्र-कामे च । महाबाहो ! इह धर्मं कर्तुम् अर्हसि ! मन्नियोगात् नः कुलस्य सन्तानाय तयोः अपत्यम् उत्पादय, राज्ये चैवाभिषिच्यस्व, भारतान् अनुशाधि च, धर्मेण दारान् च

कुरु,पिता महान् मानिमञ्जीः ।

अथ तया मात्रा सुहृद्भिश्च उच्यमानः परन्तपो धर्मात्मा धर्म्यम् एव उत्तरं वचः उवाच—"मातः ! असंशयं त्वया परः धर्मः उदाहृतः । त्वञ्च अपत्यं प्रति मे वै परां प्रतिज्ञां वेत्थ । त्वदन्तरे शुल्कहेतोः यथा वृत्तं जानासि । सत्यवति ! सोऽहम् ते पुनः सत्यं प्रतिजानामि-

"परित्यजेयं त्रैलोक्यं, राज्यं देवेषु वा पुनः ।
यद्वाधिकमेताभ्यां, न तु सत्यं कथञ्चन ॥
त्यजेच्च च पृथिवी गन्धम्, आपश्च रसमात्मनः ।
ज्योतिस्तथा त्यजेद्रूपं, वायुः स्पर्शगुणं त्यजेत् ॥
प्रभां समुत्सृजेद् अर्को, धूमकेतुः तथोष्मताम् ।
त्यजेत् शब्दं तथा ऽऽकाशं, सोमः शीतांशुतां ज्यजेत् ॥
विक्रमं वृत्रहा जह्याद्, धर्मं जह्याच्च च धर्मराट् ।
न वहं सत्यमुत्स्रष्टुं, व्यवस्येयं कथञ्चन ॥

आदि पर्वणी १०३-अ० १६–१६.

तदनन्तरं भूरिद्रविण-तेजसा पुत्रेण एवमुक्ता तु माता सत्यवती भीष्मम् उवाच—"सत्यपराक्रम ! ते सत्ये परां स्थितिं जानामि, त्वमिच्छन् स्वेन तेजसा अन्यान् त्रीन् लोकान् सृजेथाः । मदर्थे यच्च भाषितं तत्सत्यं चैव जानामि । त्वम् आपद्धर्मम् आवेक्ष्य पैतामहीं धुरं वह । परन्तप ! यथा ते कुलतन्तुश्च धर्मश्च न पराभवेत् तथा कुरु ।

तामेवं लालप्यमानां कृपणां पुत्रगृद्धिनीं धर्माद् अपेतं ब्रुवतीं भीष्मो भूयः इदम् अब्रवीत्—"राज्ञि ! धर्मान् अवेक्षस्व । नः सर्वान् मा व्यनीनशः । क्षत्रियस्य सत्याच् च्युतिः धर्मेषु न प्रशस्यते । राज्ञि ! शान्तनोः अपि सन्तानं यथा भुवि अक्षयं स्यात् तत् सनातनं क्षात्रं धर्मं ते प्रवक्ष्यामि । तं श्रुत्वा, लोक-तन्त्रम् अवेक्ष्य च आपद्धर्मार्थ-कुशलैः प्राज्ञैः पुरोहितैः सह प्रतिपद्यस्व ।

"पूर्वं पितुः वधम् अमृष्यता जामदग्न्येन रामेण परशुना राजा हैहयाधिपतिः हतः । अर्जुनस्य वै बाहूनां दश शतानि निकृत्तानि । तेन किल लोकस्य अतिदुश्चरो धर्मः आचरितः । पुनश्च धनुः आदाय महास्त्राणि प्रमुञ्चता, रथेन महीं जयता असकृत् क्षत्रं निर्दग्धम् । एवं पुरा महात्मना भार्गवेण उच्चावचैः अस्त्रैः त्रिः स प्तकृत्वः पृथिवी निः क्षत्रिया कृता । तेन महर्षिणा एवं लोके निः-क्षत्रिये कृते समन्ततः सर्वाभिः क्षत्रियाभिः संभूय वेदपारगैः ब्राह्मणैः अपत्यानि उत्पादितानि । पाणिग्राहस्य तनय इति वेदेषु निश्चितं धर्मं मनसि संस्थाप्य ब्राह्मणा नूताः समभ्ययुः । लोके अपि आचरितो दृष्टः क्षत्रियाणां पुनर्भवः । ततः पुनः क्षत्रं समुदितं समभवत् । मातः ! भरतवंशस्य पुनः सन्तानवृद्धये नियतं हेतुं वक्ष्यामि । तत् मे

निगदतः शृणु—

"ब्राह्मणो गुणवान् कश्चिद्, धनेनोपनिमन्त्र्यताम् ।
विचित्र-वीर्य-क्षेत्रेषु यः समुत्पादयेत् प्रजाः ॥२॥

आ. प. १०५ अ०

ततः सत्यवती संसज्जमानया वाचा सव्रीडं विहसन्ति इव इदं वचनमब्रवीत्—"महाबाहो ! भारत ! यथा वदसि, सत्यमेतत् । नः कुलस्य सन्तानाय, विश्वासात् ते प्रवक्ष्यामि । तथाविधम् आपद्धर्मं ते ऽनाख्यातुं न शक्यम् । नः कुले त्वमेव धर्मः, त्वं सत्यं, त्वं परागतिः । तस्मात् मे सत्यं निशम्य, कुरुष्व यद् अनन्तरम् ।

धर्मयुक्तस्य मम पितुः धर्मार्थं तरी आसीत् । तत्र सा अहं कदाचित् प्रथमयौवनं गता । अथ धर्मविदां श्रेष्ठः परमर्षिः पराशरो धीमान् यमुनां नदीं तरिष्यन् तरीम् आजगाम । स यमुनां तार्यमाणः कामार्तो मुनिश्रेष्ठो माम्-उपेत्य सान्त्वपूर्वं मधुरं वचः । मह्यम् जन्मकुलं च उक्तम् । दाशसुता इति अहम् (उक्तवती) । भारत ! शाप-भीता, पितुर्भीता च वरैः असुलभैः उक्ता प्रत्याख्यातुं न उत्सहे । भारत ! स लोकं तमसावृत्य, मां बालां तेजसाभिभूय नौ गतामेव वशमानयत् । पुरा मम महान् जुगुप्सितो मत्स्यगन्ध आसीत् । स मुनिः तमापस्य इमं शुभं गन्धं

मे प्रादात् । ततः स मुनिः माम् आह-'अस्या एव सरितो द्वीपे मामकं गर्भमुत्सृज्य, त्वं कन्याएव भविष्यसि । मम कन्या-पुत्र पाराशर्यो महायोगी द्वैपायन इति श्रुतो महान् ऋषिः बभूवः

यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः ।
लोके व्यासत्वमापेदे, कार्ष्ण्यात् कृष्णत्वमेव च ॥

स तु महान् सत्यवादी, शमपरः, तपस्वी, दग्ध-किल्विषः समुत्पन्नः । ततः पित्रा सह गतः ।

मया त्वया च नियुक्तः स ऽप्रतिमद्युतिः भ्रातुः क्षेत्रेषु कल्याणम् अपत्यं जनयिष्यति । स हि मामुक्तवान्—तत्र कृच्छ्रेषु मां स्मर इति । महाबाहो ! भीष्म ! यदि त्वमिच्छसि, तं स्मरिष्यामि* । भीष्म ! तव हि अनुमते सः महातपाः नियतं विचित्रवीर्यक्षेत्रेषु पुत्रानुत्पादयिष्यति ।

तस्य महर्षेः कीर्तने भीष्मः प्राञ्जलिः अब्रवीत्—"यो धर्मम् अर्थं च कामं च त्रीनेतान् अनुपश्यति, अर्थम् अर्थानुबन्धं च, धर्मं धर्मानुबन्धं च, कामं कामानुबन्धं च यो धीरो धिया विपरीतान् पृथक् पृथक् विचिन्त्य व्यवस्यति स बुद्धिमान् (नियोक्तव्यः) । तद् इदं धर्मयुक्तं, नः कुलस्य चैव हितं भवत्या यत् श्रेयः उक्तम्, तत् शुभं मह्यम् रोचते ।"

* स्मरिष्ये इति आर्षः पाठः १०५।१८

वैशम्पायन उवाच—"कुरुनन्दन ! ततो भीष्मेण तस्मिन् प्रतिज्ञाते काली मुनिं द्वैपायनं वै चिन्तयामास। कुरुनन्दन ! स मातुः चिन्तितं विज्ञाय, अविदितो वेदान् विब्रुवन्, क्षणेन प्रादुर्बभूव।

ततः तस्मै सुताय विधिपूर्वकं पूजां कृत्वा, बाहुभ्यां परिष्वज्य, प्रस्रवैः अभ्यषिञ्चत्। दाशेयी पुत्रं तु चिरस्य दृष्ट्वा बाष्पं मुमोच।

पूर्वजः पुत्रो महर्षिस् ताम् आर्ता मातरम् अद्भिः परिषिच्य, अभिवाद्य च वचनम् अब्रवीत्—"धर्मतत्त्वज्ञे ! भवत्या यद् अभिप्रेतं तद् अहं कर्तुमागतः। मां शाधि। तव प्रियं करवाणि"।

अथ सत्यवती वीक्ष्य एनम् इदम् अनन्तरम् उवाच—

आः मातापित्रोः साधारणाः प्रजायन्ते। तेषां यथा पिता स्वामी, तथा माता न संशयः। ब्रह्मर्षे ! स त्वं मे विधानविहितः यथा प्रथमः सुतः, तथा विचित्रवीर्यो मे ऽवरजः सुतः। यथा पितृतो भीष्मः; तथा त्वं मातृतो विचित्रवीर्यस्य भ्राता असि। पुत्र ! यथा वा मन्यसे।

अयं सत्यविक्रमः शान्तनवः सत्यं पालयन् अपत्ये तथा राज्यानुशासने बुद्धिं न कुरुते।

अनघ ! स त्वं भ्रातुः व्यपेक्षया, कुलस्य च सन्तानाय, अस्य च भीष्मस्य वचनात्, मम नियोगात् च, अनुक्रोशात् च सर्वेषां भूतानाम् रक्षणाय आनृशंस्यात् च यद् ब्रूयां तत् श्रुत्वा कर्तुम् अर्हसि।

पुत्रक ! तव यवीयसो भ्रातुः धर्मतः पुत्रकामे सुरसुतोपमे, रूपयौवन-सम्पन्ने भार्ये (स्तः)। समर्थोऽसि। अस्य कुलस्य प्रसवस्य, संतत्याः च अनुरूपम् अपत्यम् उत्पादय ।

व्यास उवाच—"सत्यवति ! परं च अपरम् एव च धर्मं वेत्थ । महाप्राज्ञे ! तथा तव मतिः धर्मे प्रणिहिता। तस्माद् अहं त्वन्नियोगात् धर्मं कारणमुद्दिश्य ते ईप्सितम् करिष्यामि। एतद् हि सनातनं दृष्टम्।

मित्रावरुणयोः समान् भ्रातुः पुत्रान् प्रदास्यामि। ते देव्यौ यत् मया व्रतमिह निर्दिष्टम् यथान्यायं संवत्सरं चरेताम्, ततः शुद्धे भविष्यतः । काचिद् अङ्गना माम् अव्रतोपेता न हि उपेयात् ।"

सत्यवती उवाच—"सद्यो यथा देव्यौ गर्भं प्रपद्येते तथा कुरु ।"

अराजकेषु राष्ट्रेषु प्रजानाथा विनश्यति ॥
नश्यन्ति च क्रियाः सर्वाः नास्ति वृष्टिः न देवता ।
आ० प० १०५-४४

प्रभो ! कथं च अराजकं राष्ट्रं धारयितुं शक्यम् । तस्माद् गर्भं समाधत्स्व । भीष्मः संवर्धयिष्यति ।

व्यास उवाच—"यदि मया भ्रातुः अकालिकः पुत्रः प्रदातव्यः, मे विरूपतां सहताम्, तयोः एतत् परं व्रतम् । यदि मे गन्धं, रूपं, वेषं, तथा वपुः सहते, अद्यैव कौशल्या विशिष्टं गर्भं प्रतिपद्यताम् ।

वैशम्पायन उवाच—तदा महातेजा व्यासः सत्यवतीं-सा शुचि-वस्त्रा हि अलंकृता कौशल्या शयने समागमनम् आकांक्षेद् इति एवमुक्त्वा सः मुनिः अन्तर्हितः। ततः सा देवी रहसि संगतां स्नुषाम् अभिगम्य धर्म्यम् अर्थ-समायुक्तं हितं वचनमुवाच—"कौशल्ये ! यद् धर्म-तन्त्रं त्वां ब्रवीमि, तत् निबोध । मद्भाग्य-संक्षयात् व्यक्तं भरतानां समुच्छेदः । मां व्यथितां, पितृवंशं च पीडितं संप्रेक्ष्य अस्य कुलस्य विवृद्धये भीष्मो बुद्धिम् अदात्; ! सा बुद्धिः तत्र*अधीना, मां तथा प्रापय । नष्टं च भारतं वंशं पुनरेव समुद्धर । सुश्रोणि ! देवराज-समप्रभं पुत्रं जनय । स हि नः कुलस्य गुर्वीम् राजधुरम् उद्वक्ष्यति ।"

सा एनां धर्म-चारिणीं कथञ्चित् धर्मतो अनुनीय

---

* १ त्वयि इत्यार्षः विभक्तिप्रयोगः । १०२।५२

विप्रान् च देवर्षीन् तथा अतिथीन् भोजयामास।

ततः सत्यवती ऋतौ काले स्नातां वधूं तदा शयने संवेशयन्ती शनैः वचनम् अब्रवीत्—"कौशल्ये ! ते देवरो ऽस्ति। सः अद्य त्वाम्*१ अनुप्रवेक्ष्यति। निशीथे ह्यागमिष्यति। अप्रमत्ता एनं प्रतीक्षस्व*२।"

सा श्वश्र्वाः तद् वचनं श्रुत्वा तदा शुभे शयने शयाना भीष्मम् अन्यान् च कुरुपुङ्गवान् अचिन्तयत्। ततो अम्बिकायां प्रथमं नियुक्तः सत्यवाग् ऋषिः दीपेषु दीप्यमानेषु शरणं ह प्रविवेश। तस्य कृष्णस्य कपिलां जटां, दीप्ते च लोचने, बभ्रूणि चैव श्मश्रूणि दृष्ट्वा देवी न्यमीलयत्।

काशिसुता मातुः प्रियचिकीर्षया तया सार्धं संबभूव। भयात् तु तम् अभिवीक्षितुं नाशक्नोत्। ततो निष्क्रान्तं पुत्रमागम्य माता उवाच ह—"पुत्र ! अपि अस्या गुणवान् राजपुत्रो भविष्यति।"

मातुः तद्वचो निशम्य, अतीन्द्रियज्ञानो, विधिना संप्रचोदितः सत्यवतीसुतो व्यासः प्रोवाच—नागायुतप्राणो, महाभागो, महा वीर्यो महाबुद्धिः, विद्वान्, राजर्षिसत्तमो भविष्यति। महात्मनः तस्य चापि शतं पुत्राः भविष्यन्ति।

---

*१ त्वा इत्यार्षः विभक्तिप्रयोगः। १०६।२

*२ प्रतीक्ष ,, ,, १०६।२

किन्तु मातुः वैगुण्यात् स वै अन्धो भविष्यति ।"

अथ माता तस्य तद्वचनं श्रुत्वा, पुत्रम् अब्रवीत्—

"नान्धः कुरूणां नृपतिः अनुरूपः तपोधन !
१०६।११

ज्ञातिवंशस्य गोप्तारं, पितृणां वंशवर्धनं, कुरुवंशस्य द्वितीयं राजानं दातुमर्हसि ।"

स महायशाः तथेति प्रतिज्ञाय निश्चक्राम ।

सापि कौशल्या कालेन तम् आत्मजम् अन्धं सुषुवे ।

अरिन्दम ! ततः सा देवी सत्या पुनरेव स्नुषां परिभाष्य यथापूर्वम् ऋषिम् आवहयत् । ततो महर्षिः तेन एव विधिना ताम् अम्बालिकाम् अभ्यगात् । सापि च तं दृष्ट्वा विवर्णा पाण्डुसंकाशा समपद्यत ।

भारत ! तां भीतां पाण्डु-संकाशां विषण्णां प्रेक्ष्य सत्यवती-पुत्रो व्यासः इदं वचनम् अब्रवीत्—यस्माद् इह मां विरूपं प्रेक्ष्य पाण्डुत्वं आपन्ना, तस्माद् एष ते सुतः पाण्डुरेव भविष्यति । शुभानने ! एतदेव च अस्य इह नाम भविष्यति ।" इति उक्त्वा भगवान् ऋषिसत्तमो निरक्रामत् ।

ततः सा देवी प्राप्तकालं कुमारं, पाण्डुलक्षण-सम्पन्नं, वरश्रिया दीप्यमानं अजीजनत् । यस्य पुत्रा महेष्वासा पञ्च पाण्डवाः जज्ञिरे ।

ततः ऋतुकाले ज्येष्ठां वधूं तस्मै न्ययोजयत् । सा सुरसुतोपमा तु महर्षेः तं रूपं गन्धं च प्रविचिन्त्य भयात् देव्या वचनं नाकरोत् । ततः काशिपतेः सुता स्वैर्भूषणैः दासीं भूषयित्वा अप्सरोपमां कृष्णाय प्रेषयामास । सा अनुप्राप्तं तमृषिं प्रत्युद्गम्य अभिवाद्य च अभ्यनुज्ञाता संविवेश । सत्कृत्य उपचचार ह । ऋषिः रहः कामोपभोगेन तस्यां तुष्टिम् अगात् ।

राजन् ! तया सह उषितः संशित-व्रतो महर्षिः उत्तिष्ठन् एनाम् अब्रवीत्—"शुभे ! अभुजिष्या भविष्यसि । अयं च श्रेयान् गर्भः ते उदरम् आगतः-लोके सर्वबुद्धिमतां वरो धर्मात्मा भविता ।"

कृष्णद्वैपायनो अपि एतत् सत्यवत्यै न्यवेदयत् । आत्मनः प्रलम्भम् । शूद्रायाः च पुत्रजन्म । मात्रा समेत्य, तस्यै गर्भं समावेद्य, धर्मस्यानृणो भूत्वा तत्रैवान्तः अधीयत ।

एते विचित्रवीर्यस्य, क्षेत्रे द्वैपायनादपि ।
जज्ञिरे देवगर्भाभाः कुरुवंशविवर्धनाः ॥
१०६।३३

इति श्री महाभारते शतसाहस्र्यां विचित्रवीर्यस्य सुतोत्पत्तिः

---

# राजा पाण्डुः

वैशम्पायन उवाच—'तेषु त्रिषु कुमारेषु जातेषु कुरु-जांगलं, कुरवः, अथ कुरुक्षेत्रम्—एतत् त्रयम् अवर्धत। भूमिः ऊर्ध्वसस्याऽभवत्। सस्यानि च रसवन्ति, पर्जन्यो यथार्तु वर्षी, द्रुमाः बहुपुष्पफलाः, वाहनानि प्रहृष्टानि, मृग,पक्षिणो मुदिताः, माल्यानि च गन्धवन्ति, फलानि च रसवन्ति, शूराश्च कृतविद्याः, सन्तश्च सुखिनःअभवन्। अथ नगराणि शिल्पिभिः वणिग्भिश्च अन्वकीर्यन्त।

नाभवन् दस्यवः केचिन् नाधर्मरुचयो जनाः।
प्रदेशेष्वपि राष्ट्राणां कृतं युगमवर्तत॥
धर्मक्रिया-यज्ञशीलाः सत्यव्रत-परायणाः।
अन्योऽन्य-प्रीति-संयुक्ता व्यवर्धन्त प्रजास्तदा॥
काम-क्रोध-विहीनाश्च नरा लोभ विवर्जिताः।
अन्योऽन्यम् अभ्यनन्दन्त, धर्मोत्तरमवर्त्तत॥
नाभवत् कृपणः कश्चित्, नाभवन् विधवाः स्त्रियः।
तस्मिन् जनपदे रम्ये कुरुभिर्बहुलीकृते॥
कूपाराम-सभा-वाप्यो ब्राह्मणावसथास्तथा।
बभूवुः सर्वर्द्धियुतास्तस्मिन् राष्ट्रे सदोत्सवः॥
तन्महोदधिवत् पूर्णं नगरं वै व्यरोचत।
द्वारतोरणनिर्यूहै युक्तमभ्रचयोपमैः॥

प्रसाद शत-संबाधं महेन्द्रपुर-सन्निभम् ।
नदीषु वनखण्डेषु-वापी-पल्वलं सानुषु ॥
काननेषु च रम्येषु विजह्रुर्मुदिताः जनाः ।
भीष्मेण धर्मतो राजन् सर्वतः परिरक्षिते ॥
बभूव रमणीयश्च चैत्य-यूप-शतांङ्कितः ।
स देशः पर-राष्ट्राणि विमृज्याभिप्रवर्धितः ॥
भीष्मेण विहितं राष्ट्रं धर्मचक्रमवर्धत ।

आ० प० १०६ । ५-१४

नराधिप !

महात्मनां कुमाराणां कृत्येषु क्रियमाणेषु सर्वे पौरजानपदाः परमोत्सुका बभूवुः । कुरु-मुख्यानां पौराणां च गृहेषु दीयतां भुज्यतां चेति वाचः सर्वशोऽश्रूयन्त ।

धृतराष्ट्रः पाण्डुः, महामतिः विदुरः च भीष्मेण जन्म-प्रभृति पुत्रवत् परिपालिताः । ते संस्कारैः संस्कृताः, व्रताध्ययन-संयुताः तु श्रमव्यायामकुशलाः धनुर्वेदे, वेदे च, गदायुद्धे असिचर्मणि च, गज-शिक्षायां तथैव नीति-शास्त्रेषु पारगाः, इतिहास-पुराणेषु, नानाशिक्षासु बोधिताः, वेद-वेदाङ्गतत्त्वज्ञाः, सर्वत्र कृतनिश्चयाः यौवनं समपद्यन्त ।

धनुषि विक्रान्तः पाण्डुः नरेषु अभ्यधिकः अभवत् । धृतराष्ट्रो महीपतिः अन्येभ्यो बलवान् आसीद् । राजन् !

त्रिषु लोकेषु कश्चित् विदुरसम्मितो धर्मनित्यो, धर्मे च परमं गतो न त्वासीत्। ततः शान्तनोर्वंशं पुनः उद्धृतं समीक्ष्य लोके सर्वराष्ट्रेषु निर्वचनम् अवर्तत—

वीरसूनां काशिसुते, देशानां कुरुजाङ्गलम्।
सर्व धर्मविदां भीष्मः, पुराणां गजसाहवयम्॥
१०९—६

अचक्षुष्ट्वाद् धृतराष्ट्रः, पारशवत्वाद् विदुरः राज्यं न प्रत्यपद्यत। पाण्डु राजा बभूव ह।

अथ कदाचित् सर्वनीतिमतां वरो गाङ्गेयो धर्मतत्त्वज्ञं विदुरं यथोचितं वाक्यमाह॥

इति श्री महाभारते शतशाहस्र्यां राजा पाण्डुः

———

## पाण्डोः विवाहः

भीष्म उवाच—"इदं नः गुणैः समुदितं कुलं सम्यक् प्रथितम्। पृथिव्याम् अपि अन्यान् पृथिवीपालान् अधिराज्यभाक्। पूर्वं च धर्मविद्भिः महात्मभिः राजभिः रक्षितम् इदं नः कुलम् उत्सादं नागमत्। मया च सत्यवत्या च महात्मना कृष्णेन च भूयो युष्मासु कुलतन्तुषु समवस्थापितम्। तच्चैतत् कुलं भूयः सागरवत् यथा वर्धते तथा मया त्वया चैव विधातव्यं न संशयः।

यादवी कन्या तथा सुबलस्य मद्रेश्वरस्य चैव आत्मजा नः कुलस्य स्वनुरूपा श्रूयते। पुत्र! ताः कन्याः सर्वशः कुलीनाः रूपवत्यश्च। अस्माकं सम्बन्धे चैव क्षत्रियर्षभाश्च उचिताः। धीमतां वर! विदुर! अस्य कुलस्य सन्तानार्थं ता वरयितव्या इत्यहं मन्ये। यद्वा मन्यसे।"

विदुर उवाच—"भवान् पिता, भवान् माता, भवान् नः परमो गुरुः। तस्माद्, स्वयं अस्य कुलस्य यद् हितम् ( तत् ) विचार्य कुरु।

वैशम्पायन उवाच—भारत! ततो गान्धारराजस्य प्रेषयामास। तत्र सुबलस्यं 'अचक्षुः' इति विचारणा आसीत्।

सः बुद्ध्या तु कुलं ख्यातिं वृत्तिं च प्रसमीक्ष्य धर्मचारिणीं गान्धारीं*धृतराष्ट्राय ददौ ।

भारत ! अथ गान्धारी धृतराष्ट्रम् अचक्षुषम्, पित्रा मात्रा च अस्मै आत्मानं दित्सितं शुश्राव ।

ततः सा पट्टमादाय, कृत्वा बहुगुणं तदा ।
बबन्ध नेत्रे स्वे, राजन् पतिव्रत-परायणा ॥
नाभ्यसूयां पतिमहम् इत्येवं कृतनिश्चया ॥
आ० प० ११०।१४

ततो गान्धारराजस्य पुत्रः शकुनिः वयसा लक्ष्म्या युक्तां स्वसारम् कौरवान् आदाय, तदा परमसत्कृतां तां धृतराष्ट्राय ददौ । भीष्मस्य अनुमते च विवाहं समकारयत् । स वीरो यदार्हं परिच्छदं, भगिनीं च दत्त्वा, भीष्मेण प्रति-पूजितः पुनः स्व-नगरम् आयात् ।

भारत ! वरारोहा गान्धारी अपि शीलाचार-विचेष्टितैः सर्वेषां कुरूणां तुष्टिं जनयामास । पतिपरायणा सुव्रता तान् सर्वान् गुरून् वृत्तेन आराध्य वाचापि अन्यान् पुरुषान् न अन्वकीर्तयत् ।

इति श्री महाभारते शत-साहस्र्यां पाण्डोर्विवाहः ।

---

* धृतराष्ट्रस्य इति आर्षः प्रयोगः ११०।१२

# कुन्ती-स्वयंवरः

वैशम्पायन उवाच—"कुन्ति-भोजस्य दुहिता पृथुललोचना पृथा सत्त्व-रूप-गुणोपेता, धर्मारामा, महाव्रता। केचित् पार्थिवाः तां तु तेजस्विनीं रूप-यौवन-शालिनीम् अतीव स्त्रीगुणैः युतां व्यावृण्वन्।

राजसत्तम ! ततः पित्रा राज्ञा कुन्ति-भोजेन नराधिपान् आहूय सा दुहिता स्वयंवरे दत्ता।

ततः सा मनस्विनी तेषां राज्ञां रङ्गमध्यस्थं, भरतसत्तमं राजशार्दूलं पाण्डुं ददर्श। कुन्ति-भोजसुता सानवद्याङ्गी रङ्गे सिंहदर्पं, महोरस्कं, वृषभाक्षं, महाबलं, सर्वेषां राज्ञां प्रभां वै प्रच्छाद्य आदित्यमिव, राजसमितौ (च) अपरं पुरन्दरम् इव तिष्ठन्तं नरवरं पाण्डुं दृष्ट्वा हृदयेन आकुला अभवत्।

ततः काम-परिताङ्गी, सकृतप्रचलमानसा, व्रीडमाना कुन्ती राज्ञः स्कन्धे स्रजं समासृजत। सर्वे नराधिपाः तं पाण्डुं कुन्त्या वृतं निशम्य यथागतं गजैः रथैः तथा अश्वैः समाजग्मुः।

राजन् ! ततः तस्याः पिता तया कुन्ति-भोजस्य दुहित्रा विवाहम् अकरोत। अमित-सौभाग्यः पाण्डुः

पौलोम्या मघवान् इव कुन्त्या युयुजे । तदा महीपतिः कुन्ति-भोजः उद्वाहं कृत्वा तं कुरुसत्तमं नानावसुभिः अर्चितं कृत्वा स्वपुरं प्रेषयामास ।

ततः प्रभुः सः कौरव-नन्दनो राजा पाण्डुः नगरं संप्राप्य महर्षिभिः ब्राह्मणैः च आशीर्भिः स्तूयमानो नानाध्वपताकिना महता बलेन तां कुन्तीं भार्यां स्व-भवने न्यवेशयत् ।

इति श्री महाभारते शतसाहस्र्यां कुन्ती विवाहः ।

---

# पाण्डोः अपरो विवाहः दिग्विजयश्च

वैशम्पायन उवाच—ततो मतिमान् शान्तनवो भीष्मः यशस्विनो राज्ञः पाण्डोः अपरस्य विवाहस्यार्थे मतिं चकार। सः स्थविरैः आमात्यैः, ब्राह्मणैः, महर्षिभिश्च सार्धं चतुरङ्गबलेन मद्रपतेः पुरं ययौ। वाहीकपुङ्गवो नृपः तं भीष्मम् आगतम् अभिश्रुत्य, प्रत्युद्गम्य अर्चयित्वा च पुरं प्रावेशयत्।

मद्रेशः तस्य शुभ्रम् आसनं, पाद्यम्, अर्घ्यम् तथैव च मधुपर्कं दत्त्वा आगमने अस्थितां पप्रच्छ।

कुरूद्वहो भीष्मः तं मद्रराजम् इदं प्रत्युवाच—"अरिंदम! माम् आगतं कन्यार्थिनम् विजानीहि। भवतः साध्वी स्वसा यशस्विनी माद्री श्रूयते। अहं तां यशस्विनीं पाण्डोः अर्थे वरयिष्यामि। राजन्! त्वं नः सम्बन्धे युक्त-रूपः, वयं तव। मद्रेश! एतत् संचिन्त, अस्मान् यथाविधि गृहाण।

मद्रपः तमेवं वादिनं भीष्मं प्रत्यभाषत—"न त्वत्तः श्रेयान् मेऽन्य वरः इति मम मतिः। पूर्वैः नृपसत्तमैः साधु वा यदि वा असाधु—अस्मिन् कुले किंञ्चित् प्रवर्तितम्, तत् अतिक्रान्तुं न उत्सहे। तत् भवतःचापि व्यक्तं विदितम्। नात्र संशयः। सत्तम! तथा भवान् 'ददातु,* इति वक्तुं न युक्तम्। वीर! स नः कुलधर्मः। तत् च

---

* देहीति इत्यार्षः प्रयोगः ११३-१०

परमं प्रमाणम् । अरिहन् ! तेन त्वाम् एतद् वाचोऽसंदिग्धं न ब्रवीमि ।

जनाधिपो भीष्मस् तं मद्रराजं इदं वचः प्रत्युवाच— "राजन् ! एष परो धर्मः स्वयंभुवा स्वयमुक्तः ; अत्र कश्चन दोषो नास्ति । अयं विधिः पूर्वैः कृतः । शल्य ! ते च इयं साधुसम्मता मर्यादा विदिता ।" इत्युक्त्वा स महातेजाः कृताकृतं शातकुम्भं, सहस्रशो विचित्राणि रत्नानि च शल्याय अदात् । गाङ्गेयो गजान् अश्वान् रथान्चैव, वासांसि, आभरणानि च, शुभं मणिमुक्ता-प्रवालं च व्यसृजत् ।

कौरवर्षभ ! संप्रतीमानसः शल्यः तत् सर्वं धनं प्रगृह्य तां स्वसारं समलंकृत्य ददौ ।

स सागरगासुतो धीमान् भीष्मः तां माद्रीमुपादाय पुरीम् आजगाम । गजसाह्वयं प्रविष्टः । ततः इष्टेऽहनि साधु-सम्मते मुहूर्ते प्राप्ते नराधिपः पाण्डुः माद्र्याः पाणिं विधिवत् जग्राह । ततः स राजा कुरुनन्दनः विवाहे निर्वृत्ते तां भाविनीं भार्य्यां शुभे वेश्मनि स्थापयामास । स राजसत्तमः राजेन्द्रः ताभ्यां कुन्त्या माद्रया च भार्याभ्यां सार्धं यथासुखं व्यचरत् ।

प्रभो ! ततः स कौरवो पाण्डुः राजा त्रिदशनिशाः

विहृत्य महीं विजिगीषया निरक्रामत् ।

स राजा भीष्म-प्रमुखान् वृद्धान् अभिवाद्य प्रणम्य च कौरव्यं धृतराष्ट्रं तथान्यान् कुरुसत्तमान् आमन्त्र्य तैः चैव अभ्यनुमोदितः प्रययौ ।

मङ्गलाचार युक्ताभिः आशीर्भिः अभिनिन्दतः गज-वाजि रथौघेन, महता बलेन अगमत् । वसुन्धरां विजि-गीषुः स देवगर्भाभो राजा पाण्डुः हृष्ट-पुष्टः-बलैः अनेकशः शत्रून् प्रायात् । कौरवाणां यशोभृता नरसिंहेन पाण्डुना गत्वा पूर्वम् आगस्कृतो दशार्णः समरे जिताः । ततः पाण्डुः नानाविधध्वजां, प्रभूत-हस्त्यश्वयुतां पदाति-रथ-संकुलां सेनामुपादाय, बहूनां महीपानाम् आगस्कारी बलदर्पितो, मगध-राष्ट्रस्य गोप्ता, दीर्घो राजगृहे हतः ।

ततः पाण्डुना भूरिशः कोषं, वाहनानि च समादाय मिथिलां गत्वा समरे विदेहाः जिताः ।

नरर्षभ ! तथा काशिषु सुह्मेषु च स्व-बाहुबल-वीर्येण कुरूणां यशः अकरोत् । नराधिपाः शरौघमहाज्वालं, शस्त्रर्षम्, अरिन्दमं पाण्डु-पावकम् आसाद्य व्यदह्यन्त । ससेनेन पाण्डुना ते स सेनाः नृपाः विध्वंसितबलाः वशगाः कृत्वा कुरुकर्मसु योजिताः । तेन निर्जिताः पृथिव्यां ते सर्वे सर्वपार्थिवाः देवेषु पुरन्दरमिव तमेकं शूरं मेनिरे ।

सर्वे प्रणता वसुधाधिपाः धनं विविधानि रत्नानि च गृहीत्वा * कृताञ्जलयः तम् उपाजग्मुः । राजा नाग-पुराधिपो मणि-मुक्ता-प्रवालं, बहु सुवर्ण-रजतं, गो-रत्नानि अश्व रत्नानि रथ-रत्नानि, कुञ्जरान्, खरोष्ट्रमहिषीः चैव, यत्किञ्चित् च अजाविकं कम्बलाजिनरत्नानि, राङ्कवाः अस्तरणानि च—तत् सर्वं प्रतिजग्राह ! पुनः मुदितवाहनः पाण्डुः तद् आदाय, स्व-राष्ट्राणि हर्षयन् गजसाह्वयं ययौ ।

शान्तनोः राजसिंहस्य, भरतस्य च धीमतः ।
प्रनष्टः कीर्तिजः शब्दः पाण्डुना पुनर् आहृतः ॥

आ० प० ११३–३८

'ये पुरा कुरुराष्ट्राणि, कुरु-धनानि च जह्रुः, ते नागपुर-सिंहेन पाण्डुना करदी-कृताः ।' इति राजानः संगतः राजा[३] अमात्याः च पौरजान-पदैः सह हृष्टा प्रतीतमानसः अभाषन्त । ते सर्वे भीष्म-पुरोगमाः नागपुरालयात् न दूरम् इव अध्वानं गत्वा तं प्राप्तम् उपयुः तदा लोकाः; हस्ति-अश्व-रथ-रत्नैः, गोभिः उष्ट्रैः अविभिः तथा नाना-यान-समानीतैः उच्चावचैः रत्नैः आवृत्तं ददृशुः । भीष्मेण सह कौरवाः (धनम्) । आसाद्य नान्तं ददृशुः ।

---

गृह्य इत्यार्षः प्रयोगः । ११३-३४

स कौसल्यानन्दवर्धनः पितुः पादौ अभिवाद्य पौरजानपदानपि यथार्हं मानयामास । भीष्मस्तु परराष्ट्राणि प्रमृद्य, पुनः कृतार्थाम् आगतं पुत्रम् आश्लिष्य हर्षाद् अश्रूणि अवर्तयत् ।

सः तुर्य-शतसंख्यानां, भेरीणां च महास्वनैः सर्वशः पौरान् हर्षयन् गजसाह्वयं विवेश ।

इति श्री महाभारते शतसाहस्र्यां पाण्डुदिग्विजयः ।



# वनगोचरः पाण्डुः

वैशम्पायन उवाच—"स पाण्डुः धृतराष्ट्राभ्यनुज्ञातः स्वबाहुजितं धनं भीष्माय, मात्रे सत्यवत्यै च उपजहार। विदुराय च तद् धनं प्रेषयामास। स धर्मात्मा सुहृदः चापि धनेन समतर्पयत्। भारत! ततः सत्यवती भीष्मं, यशस्विनीं कौसल्यां च पाण्डुजितैः अर्थैः तोषयामास। माता कौसल्या पौलोमी जयन्तमिव तम् परिष्वज्य अप्रतिम-तेजसं नरर्षभं ननन्द। धृतराष्ट्रः तस्य वीरस्य विक्रान्तैः सहस्र-शत-दक्षिणैः महामखैः अश्वमेधशतैः ईजे।

भरतर्षभ! तदा कुन्त्या-माद्र्या च संप्रयुक्तस्तु पाण्डुः जिततन्द्रिः वनगोचरो बभूव। प्रासादनिलयं, शुभानि शयनानि च हित्वा अरण्यनित्यः, सततं मृगया-परः बभूव। स हिमवतो गिरेः रम्यम् दक्षिणं पार्श्वं चरन् गिरिपृष्ठेषु महाशाल-वनेषु च उवास। कुन्त्या माद्र्या च सह पाण्डुः वने चरन् करेण्वोः मध्यस्थः श्रीमान् पौरन्दरो गज इव रराज। भार्याभ्यां सह खड्ग-बाण-धनुर्धरं विचित्रकवचं, परमास्त्र-विदं, वीरं, भारतं नृपं चरन्तं 'देवो अयम्' इति अमन्यन्त वनवासिनः।

धृतराष्ट्रेण चोदिताः नराः नित्यम् अतान्द्रिताः तस्य कामान् च भोगान् च वनान्तेषु उपजह्रुः।

## विदुर-विवाहः

सो अपगा-सुतां देवकस्य महीपतेः रूप-यौवन-सम्पन्नां पारशवीं कन्यां शुश्राव। ततो भरतर्षभः तु तां वरयित्वा आनीय महामतेः विदुरस्य विवाहं कारयामास। कुरुनन्दनो विदुरः तस्याम् आत्मनो गुणैः सदृशान् विनय सम्पन्नान् पुत्रान् उत्पादयामास।

## गान्धारी-सुतोत्पत्तिः

वैशम्पायन उवाच—"जनमेजय! ततो धृतराष्ट्रस्य गान्धार्यां पुत्रशतं जज्ञे। शतात् पर एकः च वैश्यायाम्। पाण्डोः कुन्त्यां माद्र्यां च पञ्च महारथाः पुत्राः कुलस्य वै सन्तानाय देवेभ्यः समपद्यन्त।

गान्धारी क्षुच्छ्रमाभिपरिम्लानम् उपस्थितं द्वैपायनं तोषयामास। व्यासः तस्मै वरं ददौ। सा आत्मनः भर्तुः सदृशं पुत्राणां शतं वव्रे। अथ ततः सा कालेन धृतराष्ट्राद् गर्भम् अग्रहीत्। गान्धारी तम् आहितं गर्भं संवत्सर-द्वयम् अप्रजा धारयामास। ततस्तां दुःखम् आविशत्। बालार्क-सम-तेजसं कुन्ती-सुतं जातं श्रुत्वा, आत्मन उदरस्य स्थैर्यम् उपलभ्य अन्वचिन्तयत्। ततो धृतराष्ट्रस्य अज्ञातं महता यत्नेन गान्धारी स्वोदरं घातयामास। दुःखमूर्छिता। कुक्षौ द्विवर्ष-संभृता (पेशी)

ताम् उत्स्रष्टुं प्रचक्रमे । ततो लोहाष्ठीलेव संहता मांसपेशी जज्ञे ।

अथ जपतां वरो द्वैपायनो ज्ञात्वा सत्वरम् सम् उपागमत् । तां मांसमयीं पेशीं ददर्श । ततः अब्रवीत् सौबलेयीं—"ते किमिदं चिकीर्षितम् ।" सा च परमर्षये आत्मनो मतं शशंस "कुन्ती-सुतं ज्येष्ठं, रविसमप्रभं जातं श्रुत्वा, परमेण दुःखेन मया इदम् उदरं घातितम् । पुरा त्वया मे पुत्राणां शतं किल वितीर्णम्, पुत्रशताय वै इयं मांस-पेशी जाता ।

व्यास उवाच—"सौवलेयी ! एवम् एतत् । कुतः अन्यथा । नैतत् जातु अन्यथा भवेत् । स्वैरेषु अपि उक्तम् पूर्वं मे वितथं न । क्षिप्रम् एव घृतपूर्णं कुण्डशतं विधीयताम् । शीताभिः अद्भिः इमां च अष्ठीलां परिषेचय ।

वैशम्पायन उवाच–"तदा सिच्यमाना सा तु अष्ठिला शतधा बभूव । विशांपते ! तदा कालपर्ययात् क्रमशो मांस-पेश्याः एकाधिक-शतं अंगुष्ठ-पर्वमात्राणां गर्भाणां-पृथक् एव यथा-योगं पूर्णम् । ततः तान् गर्भान् तेषु कुण्डेषु अवदधे । ततः स्वनुगुप्तेषु देशेषु रक्षां वै व्यदधात् । भगवान् पुनः–'एतावता कालेन एतानि कुण्डानि उद्घाट-नीयानि' इति सौबलीं शशंस । धीमान् भगवान् व्यासः

इत्युक्त्वा तथा प्रतिनिधाय च शिलोच्चयं हिमवन्तं तपसे जगाम ।

तेषाम् एतेन क्रमेण दुर्योधनो नृपो जज्ञे । जन्मतस्तु प्रमाणेन राजा युधिष्ठिरो ज्येष्ठः । भीष्माय धीमते:विदुराय तद् आख्यातम् । यस्मिन् अहनि दुर्धर्षो दुर्योधनो जज्ञे, तस्मिन् एव वीर्यवान् महाबाहुः भीमो अपि जज्ञे, नृप ! सः अयं जातमात्र एव धृतराष्ट्रसुतो रासभाराव-सदृशं रुराव । ननाद च । खराः गृध्र-गोमायु-वायसाः प्रत्य-भाषन्त । तदा वाताः प्रववुः, दिग्दाहः च अभवत् ।

राजन् ! ततो भीतवत् राजा धृतराष्ट्रः बहून् विप्रान्, भीष्मं, विदुरं च अन्यान् च सुहृदः तथैव सर्वान् कुरून् समानीय इदम् अब्रवीत्—"नः कुल-वर्धनो राजपुत्रो युधिष्ठिरः स्वगुणतो राज्यं प्राप्तः । नः तस्मिन् वाच्यं नास्ति । अयं तु तस्माद् अनन्तरो राजा भविष्यति, यदत्र ध्रुवं भविता, एतत् मे तथ्यं प्रब्रूत ।"

भारत ! एतस्य वाक्यस्य निधने सर्वासु दिक्षु घोराः क्रव्यादाः, अशिवशंसिनः च शिवाः प्राखादन् । राजन् ! तानि सर्वशो घोराणि निमित्तानि लक्षयित्वा महामतिः विदुरः, ते ब्राह्मणाः च अब्रुवन्—"मनुजाधिप ! ते ज्येष्ठे सुते यथेमानि घोराणि निमित्तानि उत्थितानि, तानि व्यक्तं—'एष तव सुतः कुलान्तकरणो भविता

(सूचयन्ति)। तस्य परित्यागे शान्तिः। गुप्तौ महान् अनयः। भारत! कुलस्य शान्तिमिच्छसि चेत्, एनम् एकम् त्यज। महीपते! ते पुत्राणां शतम् एकोनम् अपि अस्तु। एकेन कुलस्य तथा जगतो वै क्षेमं कुरु।

त्यजेदेकं कुलस्यार्थे, ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे, आत्मार्थे पृथिवीं त्यजेत्॥

११५—३८

सः विदुरेण, तैः च सर्वैः द्विजोत्तमैः तथोक्तो राजा पुत्र-स्नेह-समन्वितः तथा न चकार।

पार्थिव! ततो मास-मात्रेण धृतराष्ट्रस्य पूर्णं पुत्रशतं, कन्या चैका शताधिका संजज्ञे। उदरेण विवर्धता क्लिश्यमानायां गान्धार्यां वैश्या धृतराष्ट्रं महाराजं किल पर्यचरत्! राजन्! तस्मिन् संवत्सरे तस्यां धृतराष्ट्रात् धीमान् युयुत्सुः करणो जज्ञे।

एवं धीमतो धृतराष्ट्रस्य महारथानां वीराणां पुत्र-शतं जज्ञे। शताधिका एका च कन्या। महातेजा प्रतापवान् वैश्या-पुत्रो युयुत्सुः च।

जनमेजय उवाच—"तेषां राष्ट्रस्य पुत्राणां ज्येष्ठानु-ज्येष्ठतां आनुपूर्व्या च पृथक् २ नामानि प्रकीर्तय!"

वैशम्पायन उवाच—राजन्! दुर्योधनः, युयुत्सुः

दुःशासनः, दुःसहः, दुःशलः, जलसन्धः, समः, सहः, विन्दः, अनुविन्दः, दुर्धर्षः सुबाहुः, दुष्प्रधर्षणः, दुर्मर्षणः, दुर्मुखः, दुष्कर्णः, कर्णः, विविंशतिः, विकर्णः, शलः, सत्त्वः, सुलोचनः, चित्रः, उपचित्रः, चित्राक्षः, चारुचित्रः, शरासनः, दुर्मदः, दुर्विगाहः, विवित्सुः, विकटाननः, ऊर्णनाभः, सुनाभः, नन्दः, उपनन्दकः, चित्रवाणः, चित्रवर्मा, सुवर्मा, दुर्विमोचनः, अयो-वाहुः, महावाहुः चित्राङ्गः, चित्रकुण्डलः, भीम-वेगः, भीमवलः, वलाकी, वलवर्धनः, उग्रायुधः, सुषेणः कुण्डधारो, महोदरः, चित्रायुधः, निषङ्गी,, पाशी, वृन्दारकः, दृढवर्मा, दृढक्षत्रः, सोमकीर्तिः , अनूदरः, दृढसन्धः, जरासन्धः सत्यसन्धः, सदःसुवाक्, उग्रश्रवाः, उग्रसेनः, सेनानीः, दुष्पराजयः, अपराजितः, कुण्डशायी, विशालाक्षः, दुराधरः दृढहस्तः सुहस्तः, वातवेगः, सुवर्चाः, आदित्यकेतुः, वह्वाशी, नागदत्तः, अग्रयायी, कवची, क्रथनः, कुण्डी, कुण्डधारः, धनुर्धरः उग्रः, भीमरथः, वीरः वीरबाहुः, अलोलुपः, अभयः, रौद्र-कर्मा, दृढरथाश्रयः, अनाधृष्यः, कुण्डभेदी, विरावी, दीर्घलोचनः, प्रमथः, प्रमाथी, दीर्घ-रोमः, वीर्यवान् दीर्घबाहुः, महाबाहुः व्यूढोरुः, कनकध्वजः, कुण्डाशीः, विराजः च दुःशला च शताधिका ।

सर्वे त्वरितरथाः, शूराः, सर्वे युद्धविशारदाः, सर्वे वेदविदः, सर्वे सर्वास्त्र-कोविदाः। महीपते! धृतराष्ट्रेण समये परीच्य सर्वेषाम् अनुरूपाः दाराः विधिवत् कृताः। भरतर्षभ! समये च धृतराष्ट्रो नराधिपः दुःशलां चापि विधिना जयद्रथाय प्रददौ।

इति श्री महाभारते शतसाहस्र्यां गान्धारी सुतोत्पत्तिः।



# पाण्डोः वानप्रस्थः

पाण्डुरुवाच (आत्मनि)—"अमी सतां कुले जाताः अकृतात्मनः, कामजालीविमोहिताः, कर्मणा वतं दुर्गतिं प्राप्नुवन्ति । शशवद् धर्मात्मनाः जातो मम पिता (विचित्रवीर्यः) कामात्मैव बाल एव जीवितान्तम् अनुप्राप्तः इति नः श्रुतम् । तस्य कामात्मनो राज्ञः क्षेत्रे भगवान् संयतवागृषिः कृष्णद्वैपायनो माम् अजीजनत् ।

तस्याद्य व्यसने बुद्धिः संजातेयं ममाधमा ।
त्यक्तस्य देवैरनयात्, मृगयां परिधावतः ॥
मोक्षमेव व्यवस्यामि वधो हि व्यसनं महत् ।
स्ववृत्तिम् अनुवर्त्तिष्ये तामहं पितुरव्ययाम् ॥
११९–५ । ६ ॥

असंशयम् आत्मानम् अतीव तपसा योजयिष्यामि तस्माद् अहम् एकः एकाकी एकैकस्मिन् वनस्पतौ भैक्ष्यं चरन् मुनिः मुण्डः आश्रम-नियमान् चरिष्यामि पांसुना समवच्छन्नः, शून्यागार-कृतालयः, वृक्षमूल-निकेतनो वा त्यक्त-सर्व-प्रियाप्रियः तुल्य-निन्दात्मसंस्तुतिः न शोचन् न प्रहृष्यन् निराशीः निर्नमस्कारोः, निर्द्वन्द्वो, निष्परिग्रहः, कंचिदपि च नावहसन्. न क्वचित्

भ्रुकुटीं कुर्वन् नित्यं प्रसन्न-वदनः सर्व भूते-हितेरतः, चतुर्विधं जङ्गमाजङ्गमं सर्वम् अविहिंसन्, सदा स्वासु प्रजास्विव प्राणभृतः प्रति समः, एककालं दशपञ्च वा कुलानि भैक्ष्यं चरन्, भैक्ष्यस्य वा असंभवे अनशनानि अपि चरन् अल्पम् अल्पं च भुञ्जानः पूर्वालाभे न जातुचित् अन्यत्र विचरन् अलाभे सति लाभाद् अपूरयन् अलाभे यदि वा लाभे समदर्शी महातपाः, अस्य वा एकं बाहुं तक्षतः (अस्य वा) एक चन्दनेन उक्षतः उभयोः तयोः न अकल्याणं न कल्याणं चिन्तयन्; न जिजीषुवत् न मुमूर्षवत् किञ्चिद् आचरन्, जीवितं न अभिनन्दन्, मरणं चैव न द्विषन्, याः काश्चिद् निमेषादि व्यवस्थिताः अभ्युदय-क्रियाः जनता कर्तुं शक्याः ताः सर्वाः समतिक्रम्य, तासु चापि अनवस्थासु त्यक्तसर्वेन्द्रियक्रियः, संपरित्यक्त-धर्मार्थः. सुनिर्मुक्तात्मकल्मषः सर्व पापेभ्यो निर्मुक्तः, सर्व-वागुरा-व्यतीतः मातरिश्वनः सधर्मा न कस्यचित् वशे तिष्ठन्—एवं प्रकारया एतया वृत्त्या सततं चरन् निर्भयं मार्गमाश्रितः देहं संस्थापयिष्यामि।

स्ववीर्य-क्षय-शोचिते सुकृपणे मार्गे नाहं चरेयम्। (चरेयं च) वीर्य-वर्जितः स्वधर्मात् सततोपेते।

सत्कृतोऽसत्कृतो वापि योऽयं कृपण चक्षुषा ।
उपैति वृत्तिं कामात्मा स शुनां वर्त्तते पथि ॥
आ० प० ११६।२२

वैशम्पायन उवाच—"सुदुःखार्तो निश्वासपरमो नृपः एवमुक्त्वा कुन्तीं माद्रीं च अवेक्षमाणः समभाषत– "कौशल्या क्षत्ता विदुरः बन्धुभिः च सह राजा, आर्यासत्यवती, भीष्मः, ते राजपुरोहिताः संशितव्रताः च सोमपाः महात्मानः ब्राह्मणाः, ये च तत्र अस्मदाश्रयाः पौरवृद्धा निवसन्ति ते सर्वे प्रसाद्य वक्तव्याः 'पाण्डुः प्रव्रजितः वनम्' ।

वनवासे धृतात्मनो भर्तुर्वचनं निशम्य कुन्ती माद्री च तत्समं सम-भाषताम् । भरतर्षभ ! अन्येऽपि हि आश्रमाः सन्ति येषु* आवाभ्यां धर्मपत्नीभ्यां सह महत् तपस्तप्तुं शक्यम् * शरीरस्य अधिमोक्षाय महाफलं स्वर्गं प्राप्य स्वर्गस्थोऽपि त्वमेव भर्ता भविता न संशयः। इन्द्रियग्रामं प्रणिधाय, काम-सुखे त्यक्त्वा हि आवां भर्तृलोकपरायणे विपुलं तपस्तपस्यावः। महाप्राज्ञ ! विशांपतेयदि च त्वम् आवां त्यक्षसि, अद्यैव आवां जीवितं प्रहास्यावः, नात्र संशयः ।"

पाण्डुः उवाच—"यदिहि एतद् युवयोः धर्मसंहितं

* येशब्दः इति पाठे, अध्याहर्तव्य भवति।

व्यवसितं, ( तर्हि ) अहं अव्ययां पितुः स्ववृत्तिम् अनुवर्त्तिष्ये ग्राम्यसुखाहरं त्यक्त्वा महत् तपः तप्यमानः, वल्कली, फल-मूलाशी महावने चरिष्यामि । उभौ कालौ अग्नौ जुह्वत्, उभौ कालौ उपस्पृशन्, कृशः परिमिताहारः, चीर-चर्म जटाधरः, शीतवातातपसहः, क्षुत्पिपासानवेक्षकः, दुश्चरेण तपसा इदं शरीरम् उपशोषयन्, एकान्तशीलो विमृशन्, पक्वापक्वेन वर्त्तयन्, वन्येन वाग्भिः अद्भिश्च पितॄन् देवांश्च तर्पयन् वानप्रस्थजनस्य अपि दर्शनं कुर्वन् कुलवासिनाम् अप्रियाणि न आचरिष्यामि, किं पुनः ग्रामवासिनाम् । एव कांक्षमाणः आरण्यशास्त्राणाम् उग्रतरं विधिम् आ अस्य देहस्य समापनात् आस्थास्ये। ”

वैशम्पायन उवाच—“इत्येवं राजा कौरवनन्दनः पाण्डुः ते भार्ये उक्त्वा, ततः चूडामणिम् निष्कम् अङ्गदे कुण्डलानि च, महार्हाणि, वासांसि, स्त्रीणाम् आभरणानि च सर्व-विप्रेभ्यः प्रदाय पुनरभाषत ।

“नागपुरं गत्वा वाच्यम्—‘अर्थं, कामं, सुखं, परमात्मिकां रतिञ्च—सर्वमुत्सृज्य सभार्यः कुरुनन्दनः प्रव्रजितः पाण्डुः वनं प्रतस्थे ।”

ततः च तस्यानुयातारः ते परिचारकाः भरतसिंहस्य विविधाः करुणाः गिरः श्रुत्वा भीमम् आर्तस्वरं कृत्वा

हा हा इति परिचुक्रुशुः। उष्णम् अश्रु विमुञ्चतं तं महीपतिं विहाय, सर्वं तद् धनमादाय तूर्णं नागपुरं ययौ।

ते राज्ञो नगरं गत्वा महात्मनो यथावृत्तं कथयाञ्चक्रिरे, राज्ञस्तद् विविधं धनं ददुः। ततः तेभ्यो महावने यथावृत्तं श्रुत्वा नरश्रेष्ठो धृतराष्ट्रः पाण्डुमेव अन्वशोचत्।

भ्रातृशोक-समाविष्टः तमेव अर्थं विचिन्तयन् न शयनासन-भोगेषु कर्हिचित् रतिं विंदति।

ततः कौरव्यो राजपुत्रस्तु फल-मूलाशनः पाण्डुः पत्नीभ्यां सह नागशतं गिरिं जगाम। स चैत्र-रथम् आसाद्य, कालकूटं च अतीत्य, हिमवन्तं च अतिक्रम्य गन्धमादनं ययौ। महाभूतैः सिद्धैः परमर्षिभिश्च रक्ष्यमाणः समेषु विषमेषु च उवास। इन्द्र-द्युम्न-सरः प्राप्य हंस-कूटम् अतीत्य च शतशृङ्गे महाराजः तापसः समतप्यत। तत्रापि तपसि श्रेष्ठे वर्तमानः स वीर्यवान् सिद्धचारण-सङ्घानां प्रियदर्शनो बभूव। भारत! (सः) स्वेन वीर्येण शुश्रूषु अनहंवादी, संयतात्मा, जितेन्द्रियः स्वर्गं गन्तुं पराक्रान्तः। केषां चिद् भ्राता अभवत्, केषाञ्चित् सखा अभवत्। अपरे ऋषयः तु एनं पुत्रवत् पर्यपालयन्। भरतर्षभ! महता कालेन स निष्कल्मषं तपः प्राप्य पाण्डुः ब्रह्मर्षि-सदृशो बभूव।

अमावस्यायां तु संशितव्रताः ऋषयः संहिताः। पाण्डुः संप्रायातान् ऋषीन् दृष्ट्वा वचनम् अब्रवीत्—

महाभागाः ! अप्रजस्य स्वर्गे द्वारं न परिचक्षते तेन अप्रजोऽभितप्तोऽहं वः ब्रवीमि । पित्र्याद् ऋणाद् अनिर्मुक्तः । तपोधनाः ! तेन तप्ये । देहनाशे पितृणां नाशो ध्रुवः एष निश्चयः ।

ऋणैः चतुर्भिः संयुक्ता जायन्ते मानवा भुवि ।
पितृ देवर्षि-मनुजैः (नां) देयं तेभ्यश्च धर्मतः ॥
यज्ञैस्तु देवान् प्रीणाति, स्वाध्याय तपसा मुनीन् ।
पुत्रैः श्राद्धैः पितृंश्चापि, आनृशंस्येन मानवान् ॥

आ० प० १२०।१८।२०

यो मानवः एतानि यथा-कालं न बुध्यति, तस्य लोकाः न सन्ति, इति धर्मविद्भिः प्रतिष्ठितम् । ऋपिदेव-मनुष्याणां त्रयाणां धर्मतः परिमुक्तोऽस्मि ! आत्मनि नश्यति इतरेषां तु नाशः । तापसाः ! इदानीं पित्र्याद् ऋणाद् अनिर्मुक्तः अस्मि । इह तस्मात् नरोत्तमाः प्रजा-हेतोः प्रजायन्ते । तथैवाहं पितुः क्षेत्रे तेन महर्षिणा जातः तथैव अस्मिन् मम क्षेत्रे प्रजाकथं संभवेत् ।"

ऋषय ऊचुः—"राजन् ! तव देवोपमं शुभम् अन-घम् अपत्यम् अस्ति । दिव्येन चक्षुषा विद्मः । नर-व्याघ्र ! देवोदिष्टं कर्म * इह उपपादय अक्लिष्टं फलम्-अव्यग्रो विन्दते बुद्धिमान् नरः ।" राजन् । तस्मिन दृष्टे

* कर्मणा इत्यार्षः विभक्ति प्रयोगः ।

फले प्रयत्नं कर्तुम् अर्हसि। गुण सम्पन्नम् प्रीतिकरम् अपत्यं लब्धा हि असि।

वैशम्पायन उवाच—तत् तापसवचः श्रुत्वा पाण्डुः चिन्ता-परोऽभवत्।

इति श्री महाभारते शतसाहस्त्र्यां पाण्डोर्निर्वेदः।



# कुन्ती सुतोत्पत्तिः

सः विजने यशस्विनीं धर्मपत्नीं कुन्तीम् अब्रवीत्—"कुन्ति ! त्वम् आपदि अपत्योत्पादने यत्नं समर्थय। शाश्वतं धर्म-वादिनो धीराः "लोकेषु अपत्यं नाम धर्म-संहिता प्रतिष्ठा" इति विदुः। इह इष्टं, दत्तं, तप्तं तपः, स्वनुष्ठिताः नियमाश्च अनपत्यस्य सर्वमेव न पावनम् उच्यते। शुचिस्मिते ! सोऽहम् एतान् एवं विदित्वा, चिन्तयन् अनपत्यः शुभान् लोकान् न प्राप्स्यामि इति प्रपश्यामि। धर्म-दर्शने इमे षट् पुत्राः वै बन्धुदायदा षडेव पुत्राः अबन्धु-दायदाः पृथे ! तान् मे शृणु। १ स्वयं जातः २ प्रणीतः ३ परिक्रीतः च यः सुतः ४ पौनर्भवः ५ कानीनः ६ स्वैरिण्याः च यो जायते। ७ दत्तः ८ क्रीतः ९ कृत्रिमः १० यः स्वयम् उपगच्छेत्। ११ सहोढो ज्ञातिरेताः च, १२ हीनयोनिधृतः च यः।

पूर्व-पूर्व-तमा-भावं मत्त्वा लिप्सेत वै सुतम्।
उत्तमाद् देवरात् पुंसः कांक्षन्ते पुत्रम् आपदि॥

आ० प० १२०—। ३६

पृथे ! धर्म-फलदं श्रेष्ठम् अपत्यम् आत्म-शुक्राद् ( भिन्नाद् ) अपि मानवाः विंदन्ति। स्वायंभुवः अब्रवीत्। तस्मात् स्वयं प्रजननाद् हीनः अद्य त्वां प्रहेष्यामि—'यशस्विनि ! त्वं सदृशात् श्रेयसो वा अपत्यम् विन्दस्व* ।

कुन्ति ! एतां शारदण्डायिनीं कथां प्रति शृणु। सा वीरपत्नी ! गुरुणा पुत्र-जन्मनि नियुक्ता। कुन्ति। पुष्पेण प्रयता, स्नाता निशि चतुष्पथे द्विजं वरयित्वा, पुंसवने सिद्धम् अनलं हुत्वा, तस्मिन् कर्मणि अवसिते सा तेनैव सह अवसत्। तत्र दुर्जयादीन् त्रीन् महारथान् जनयामास। कल्याणि ! तथा त्वमपि मन्नियोगात् तपसा अधिकात् ब्राह्मणात् क्षिप्रम् अपत्योत्पादनं प्रति यतस्व"* । महाराज ! एवमुक्ता कुन्ती कुरूणाम् ऋषभं, वीरं, भूमिपतिं पतिं पाण्डुम् अभाषत" धर्मज्ञ ! राजीवलोचन ! त्वयि अभिरतां धर्म-पत्नीं माम् एवं वक्तुं न कथञ्चन अर्हसि महाबाहो ! भारत ! वीर। त्वमेव मयि धर्मतो वीर्योत्पन्नानि अपत्यानि मयि जनयिष्यसि। मनुज-शार्दूल ! त्वया सहिता स्वर्गं गच्छेयम्। कुरुनन्दन ! अपत्याय त्वमेव मां गच्छ।

---

*विन्द इत्यार्षः प्रयोगः आ० प- १२०—४२
*यत " " "

अहं त्वदृते नरं मनसा अपि न गच्छेयम्। भुवि त्वत्तः प्रतिविशिष्टः अन्यः को मानवोऽस्ति।"

पाण्डुः उवाच—"अथ इदं पुराणं, धर्मविद्भिः महात्मभिः दृष्टं धर्म-तत्त्वं प्रवक्ष्यामि। मे निबोध। वरानने! पुरा किल स्त्रियः अनावृताः आसन्। चारुहासिनि! कामचार-विहारिण्यः, स्वतन्त्राश्च। सुभगे! कौमारात् पतीन् व्युच्चरमाणानां तासाम् अधर्मो न अभूत् वरारोहे! स हि धर्मः पुरा अभवत्। अद्य अपि तिर्यग्-योनिगताः प्रजाः काम-क्रोध-विवर्जिताः तमेव पौराणं धर्मम् अनुविधीयन्ते। रम्भोरु! उत्तरेषु कुरुषु अद्य अपि अयं प्रमाणदृष्टः धर्मः महर्षिभिः पूज्यते। स हि सनातनो धर्मः स्त्रीणाम् अनुग्रहकरः।

शुचिस्मिते! अस्मिन् लोके तु येन, यस्माच् च इयं मर्यादा स्थापिता तत् मे विस्तरतः शृणु—

उद्दालको नाम महर्षिः बभूव, इति नः श्रुतम्। तस्य श्वेतकेतुरिति ख्यातः पुत्रो मुनिः अभवत्। कमलपत्राक्षि! तेन श्वेतकेतुना कोपात् इयं धर्म्या मर्यादा कृता। यदर्थं तत् मे निबोध।

पुरा किल पितुः समक्षं श्वेतकेतोः मातरं ब्राह्मणः पाणौ जग्राह। 'गच्छावः' इति च अब्रवीत्। ततो मातरं तथा बलादिव नीयमानां दृष्ट्वा अमर्ष-चोदितः

ऋषि-पुत्रः कोपं चकार। पिता तं श्वेतकेतुं क्रुद्धं दृष्ट्वा उवाच ह—'तात! कोपं मा कार्षीः। एष धर्मस्तु सनातनः। भुवि सर्वेषां वर्णानाम् अंगनाः अनावृताः। तात! यथा गावः स्थिताः तथा स्वे-स्वे वर्णे प्रजाः। अथ ऋषि-पुत्रः श्वेतकेतुः तं धर्मं न चक्षमे। भुवि स्त्री-पुंसोः च इमां मर्यादां चकार। महाभागे! तदा प्रभृति इयं मर्यादा मानुषेषु स्थिता, न त्वेव अन्येषु जन्तुषु इति नः श्रुतम्।

व्युच्चरन्त्याः पतिं नार्याः अद्यप्रभृति पातकम्।
भ्रूण हत्या-समं घोरं भविष्यत्यू असुखावहम्॥
भार्यां तथा व्युच्चरतः कौमार-ब्रह्मचारिणीम्।
पतिव्रताम् एतदेव भविता पातकं भुवि॥
पत्या नियुक्ता या चैव पत्नी पुत्रार्थमेव च।
न करिष्यति तस्याश्च भविष्यति तदेव हि॥

आ० प० १२१। १८, १९, २०

इति तेन उद्दालकस्य पुत्रेण श्वेतकेतुना भीरुः! धर्म्या मर्यादा बलात् स्थापिता।

रम्भोरु! सौदासेन च पुत्र-जन्मनि नियुक्ता मदयन्ती वसिष्ठमृषिं जगाम इति नः श्रुतम्। सा भाविनी तस्माद् अश्मकं नाम पुत्रं लेभे। सा अपि एवं भर्तुः प्रिय-चिकीर्षया कृतवती।

कमलेक्षणे! अस्माकम् अपि जन्मवंश वृद्धये कृष्ण

द्वैपायनात् ते विदितम् ।

अनिन्दिते ! अतः एतानि सर्वाणि कारणानि वै समीक्ष्य मम एतद् वचनं कर्तुम् अर्हसि । राजपुत्रि ! भर्ता भार्यां धर्म्यम् अधर्म्यं वा यद् ब्रूयात् तत् तथा कार्यम् इति वेदविदो विदुः । अनवद्याङ्गि ! विशेषतः पुत्रगृद्धी, पुत्रजननात् स्वयं हीनः, पुत्र-दर्शन-लालसः यथा अहम् (ब्रवीमि) । शुभे ! रक्तांगुलिनिभः पद्मपत्रनिभः अयम् अञ्जलिः ते प्रासादार्थं मया शिरसि अभ्युद्यतः । सुकेशान्ते ! मन्नियोगात् तपसाधिकात् द्विजातेः गुण-समायुक्तान् पुत्रान् उत्पादयितुम् अर्हसि । पृथुश्रोणि ! त्वत्कृते अहं पुत्रिणां गतिं गच्छेयम् ।'

वैशम्पायन उवाच—'ततः वरारोहा कुन्ती भर्तुः प्रियहिते रता पाण्डुं प्रत्युवाच—'सत्यवतां वर ! ब्रूहि कं देवम् आह्वयामि । अस्मिन् कर्मणि त्वत्तो अनुज्ञाप्रतीक्षां स्थितां मां विद्धि ।

पाण्डुः उवाच—'वरारोहे ! अद्यैव त्वं यथाविधि प्रयतस्व । शुभे धर्मम् आह्वय । स हि लोकेषु पुण्य-भाक् । नो ?.नः अधर्मेण न कथञ्चन संयुज्येत । अयं लोकः च अयं धर्म इति मंस्यते । स कुरूणां धार्मिको भविष्यति, न संशयः । धर्मेण च दत्तस्य अधर्मे मनो न रंस्यते । शुचिस्मिते ! तस्माद् धर्मं पुरस्कृत्य नियता उपचारा-

भिचाराभ्यां वै धर्मम् आवाहयस्व।

वैशम्पायन उवाच—तेन भर्त्रा तथोक्ता वराङ्गना 'तथा (अस्तु)' इति उक्त्वा अभिवाद्य अभ्यनुज्ञाता प्रदक्षिणम् अवर्तत।

जनमेजय! गान्धार्या। संवत्सर-धृतेगर्भे कुन्ती-गर्भार्थे अच्युतं धर्मम् आह्वयामास। ततः विहस्य ताम् अब्रवीत्*—"अहं ते किं ददामि!"

सा तं विहस्यमाना इदम् अब्रवीत्—"पुत्रं देहि!"

सा हि योगमूर्तिधरेण धर्मेण संयुक्ता। वरारोहा सर्व-प्राण-भृतां हितं पुत्रं लेभे।

अभिजिते, ऐन्द्रे, चन्द्रसमायुक्ते अष्टमे मुहूर्ते, सूर्ये दिवामध्यगते, अतिपूजिते पूर्णे तिथौ, कुन्ती समृद्धयशसं प्रवीरं सुतं सुषाव।

यशसा, तेजसा, व्रतेन चैव समन्वितः पाण्डुः तं धार्मिकं सुतं लब्ध्वा पुनः ताम् अब्रवीत्—"क्षत्रं बल-ज्येष्ठं प्राहुः। बलज्येष्ठं सुतं वृणु।"

ततः सा भर्त्रा तथोक्ता तु वायुमेव आजुहाव। ततः मृगारूढो महाबलो वायुः ताम् आगतः—"कुन्ति! अद्य ते किं ददामि ब्रूहि! यत् ते हृदि स्थितम्।"

सा सलज्जा विहस्य आह—"सुरोत्तम! बलवन्तं महाकायं सर्व-दर्प-प्रभञ्जनं पुत्रं देहि।"

---

* ब्रयाः इत्यार्षः प्रयोगः १२.३।५

तस्मात् महाबाहुः भीम-पराक्रमो भीमः जज्ञे ।

वृकोदरे जातमात्रे इदम् अत्यद्भुतम् आसीत् । यद् मातुः अङ्कात् पतितः शिलां गात्रैः अचूर्णयत् ।

व्याघ्र-भयोद्विग्ना कुन्ती सहसा किल उत्पतिता, स्वे उत्सङ्गे संसुप्तं वृकोदरं न अन्वबुध्यत । वज्रसंघातः सः कुमारो गिरौ न्यपतत् । तेन पतता शिला शतधा गात्रैर्विचूर्णिता । तां शिलां चूर्णितां दृष्ट्वा पाण्डुः विस्मयम् आगतः ।

भरत-सत्तम ! यस्मिन् अहनि तु भीमो जज्ञे, वसुधाधिप ! तत्रैव दुर्योधनोऽपि प्रजज्ञे ।

वृकोदरे जाते भूयः पाण्डुः इदम् अन्वचिन्तयत् कथं नु मे वरः पुत्रो लोक-श्रेष्ठो भवेद् इति ।'

दैवे पुरुषकारे च लोकोऽयं संप्रतिष्ठितः ।
तत्र दैवं तु विधिना काल-युक्तेन लभ्यते ॥

१२३ । २१

राजा इन्द्रो हि देवानां प्रधानः अप्रमेय-बलोत्साहो वीर्यवान् अमित-द्युतिः इति नः श्रुतम् । स यं पुत्रं मे दास्यति स वरीयान् भविष्यति ।

महता तु कालेन तं वासवः प्रत्यपद्यत—"तव पुत्रं प्रदास्यामि त्रिषु लोकेषु विश्रुतम् । "इत्युक्तः" कौरवो राजा महात्मना वासवेन ।

देवराज-वचः स्मरन् धर्मात्मा कुन्तीम् उवाच— "कल्याणि ! तव उदर्कः । देवगणेश्वरः तुष्टः । ते पुत्रं दातुमिच्छति यथा त्वया संकल्पितम् । सुश्रोणि ! अतिमानुषकर्माणं यशस्विनम् अरिन्दमम् नीतिमन्तं महात्मानम् आदित्य-समतेजसम् दुराधर्षं, क्रियावन्तम् अतीवाद्भुत-दर्शनम् क्षत्रियतेजसां धाम पुत्रं जनय । देवेन्द्रात् प्रसादो लब्धः । शुचिस्मिते ! तम् आह्वय*।

वैशम्पायन उवाच—एवमुक्ता यशस्विनी ततः शक्रम् आजुहाव । अथ देवेन्द्रः आजगाम, अर्जुनम् च जनयामास !

महायशाः पाण्डुस्तु पुनरेव पुत्र-लोभात् एनां धर्मपत्नीं वक्तुमैच्छत् । अथ कुन्ती तु एनम् अब्रवीत्—

नातः ! चतुर्थं प्रसवम् आपत्स्व् अपि वदन्त्य् उत ।
अतः परं स्वैरिणी स्यात्, बन्धकी पञ्चमे भवेत् ॥

आ० प० १२३।७८

स त्वम् इमं धर्मम् विदन् माम् अधिगम्य, अपत्यार्थं समुत्क्रम्य प्रमादादिव भाषसे ।

---

* आह्व इति तु आर्षः प्रयोगः आ० । १२३।३४

# माद्र्यां सुतोत्पत्तिः

वैशम्पायन उवाच—कुन्तीपुत्रेषु च जातेषु मद्र-राज-सुता रहो वचनम् अब्रवीत्। परन्तप! त्वयि विगुणे अपि मे सन्तापो न अस्ति। अनघ! न च वराहायाः अवरत्वे नित्यदा स्थित्वा अपि। नृपते! तथा गान्धार्याः चैव पुत्रशतं जातं श्रुत्वा मे दुःखं नाभवत्। तुल्य-तायाम् अपुत्रता, इदं तु मे महद् दुःखम्। इदानीं तु मे भर्तुःदिष्ट्या कुन्त्याम् अपि सन्ततिः अस्ति।

यदि तु कुन्तिराजसुता अपत्यसन्तानं मयि कुर्यात्, मे अनुग्रहः स्यात्, तव चापि हितं भवेत्।

पाण्डुः उवाच— माद्रि। मम अपि हृदि सदा एवम् अर्थः परिवर्तते। इष्टानिष्ट-विवक्षया त्वां वक्तुं न प्रसहे। तव तु इदं मतं मत्वा अतः परं प्रयतिष्ये।' एवमुक्त्वा सकृत् माद्रीम् अब्रवीत्—दैवतं चिन्तय। तस्मात् तेऽनुरूपम् अपत्यम् असंशयं भविता'।

ततो माद्री मनसा विचार्य अश्विनौ जगाम। तौ आगम्य तस्यां यमौ सुतौ जनयामासतुः।

विशांपते! शत शृङ्ग-निवासिनो भक्त्या, कर्मणा तथैव च आशीर्भिः तेषां नामानि चक्रिरे। ज्येष्ठं युधिष्ठिरेति, मध्यमं भीमसेनेति, तृतीयम् अर्जुनेति, कुन्तीपुत्रान् अकल्पयन्। प्रीतमानसाः ते विप्राः पूर्वजं

नकुलेति' अपरञ्च सहदेवेति माद्री-पुत्रौ अकथयन् । अनु संवत्सरं जाताः तेऽपि कुरुसत्तमाः पाण्डु-पुत्राः पञ्च-संवत्सरा इव व्यराजन्त महासत्वाः महावीर्याः महाबला-पराक्रमाः ।

नराधिपः पाण्डुः तान् सुतान् देव-रूपान् महौजसो दृष्ट्वा परमिकां मुदं लेभे। सर्वेषां शतशृङ्गनिवासिनां ऋषीणां तथैव मुनियोषितामपि प्रियाः बभूवुः । ते तत्र पुण्ये हैमवते गिरौ विवर्धमानाः समेयुषां महर्षीणां विस्मयं जनयामासुः ! ते च पञ्च. शतं चैव, सर्वे कुरु-वंशविवर्धनाः अल्पेन कालेन अप्सु नीरजा इव ववृधुः ।

इति श्री महाभारते शत साहस्र्यां माद्र्यां कुन्त्यां च सुतोत्पत्तिः।



ततो राजा पाण्डुः स्व-बाहुबलम् आश्रितः भूतसम्मोहने सुपुष्पितवने काले कदाचित् मधु-माधवे, महावने रम्ये पर्वते तान् दर्शनीयान् पञ्च पुत्रान् पश्यन्, स-भार्यो वनं व्यचरत् । पलाशैः, तिलकैः, चूतैः, चम्पकैः परिभद्रकैः, अन्यैः च फल-पुष्प-समृद्धिभिः बहुभिः वृक्षैः, विविधैः जलस्थानैः, पद्मिनीभिः शोभितं तद् वनं संप्रेक्ष्य पाण्डोः हृदि मन्मथः प्रजज्ञे । शुभं वसनं बिभ्रती माद्री एका तं प्रहृष्ट-मनसं यथाऽमरं विचरन्तम्-अनुजगाम । तनुवाससं वयःस्थां तु तां समीक्ष्य * गहने उद्गतोऽग्निः इव तस्य कामः प्रववृते । कामवशीकृतो राजा रहसि एकां तु तां राजीवलोचनां दृष्ट्वा कामं नियन्तुं न शशाक । ततो यथाबलं विस्फुरन्त्या तया देव्या वार्यमाणो राजा एनां रहोगतां बलाद् निजग्राह ।

कौरव्यः मन्मथस्य वशंगतः बलादिव मैथुनधर्मेण माद्रीम् अन्वगच्छत् जीवितान्ताय ।

तस्य कामात्मनो बुद्धिः साक्षात् कालेन मोहिता ।
संप्रमथ्येन्द्रियं ग्रामं प्रनष्टः सह चेतसा ॥

१२६-११

सः परम-धर्मात्मा कुरुनन्दनःपाण्डुः तया भार्यया

---

* समीक्ष्यमाणां स इति तु अपपाठः १२५-६

सह संगम्य काल-धर्मेण युयुजे। ततो माद्री गतचेतसं राजानं पुनः पुनः समालिङ्ग्य अतीव दुःखजं शब्दं मुमोच। ततः पुत्रैः सह कुन्ती, माद्री-पुत्रौ च पाण्डवौ यत्र तथागतो राजा तत्र सहिताः आजग्मुः। राजन्! ततो आर्ता माद्री कुन्तीम् इदं वचः अब्रवीत्–,'एकैव त्वम् इह आगच्छ। तिष्ठन्तु तत्रैव दारकाः।"

तस्याः तद् वचनं श्रुत्वा, तत्रैव दारकान् आधाय 'हता अहम्' इति आक्रुश्य सा सहसैव आजगाम। पाण्डुं माद्रीं च धरणीतले शयानौ दृष्ट्वा शोक-परीताङ्गी सुदुःखिता कुन्ती विललाप। माद्रि! ननु नाम त्वया नराधिपो रक्षितव्यः। सा त्वं विजने वने कथं नराधिपं लोभितवती। वाल्हीकि! त्वं धन्या असि। तथा मत्तो भाग्यतरा, यत् प्रहृष्टस्य महीपतेः वक्त्रं दृष्टवती असि।

माद्री उवाच—'देवि! मया विलपत्या असकृत् वार्यमाणेन दिष्टं सत्यं चिकीर्षुणा अनेन आत्मा न वारितः।

कुन्ती उवाच—'माद्रि! अहं ज्येष्ठा धर्मपत्नी। मम धर्मफलं ज्येष्ठम्। अवश्यं भाविनो भावात् माद्रि मां मा निवर्तय। अहं प्रेतवशं गतं भर्तारम् अन्वेष्यामि। त्वम् उत्तिष्ठ एनं विसृज्य इमान् दारकान् पालय।

माद्री उवाच—',अपलायिनं भर्तारम् अहमेव अनुयास्यामि। कामानां न हि तृप्ता अस्मि। ज्येष्ठा (असि)। माम् अनुमन्यताम्। अयं भरत-सत्तमः कामाद् मां च अभिगम्य क्षीणः। अस्य तं कामं यमसादने कथं नु उच्छिन्द्याम्। आर्ये! न चापि अहं ते सुतेषु वृत्ति-निर्विशेषं वर्तयन्ती चरिष्यामि। तथा च माम् एनः स्पृशेत्। मे सुतयोः स्वपुत्रवद् वर्त्तितव्यम्। कुन्ति! मां च कामयमानो अयं राजा प्रेतवशं गतः। आर्ये! एतत् प्रियं कुरु—मम अपि इदं कलेवरं राज्ञः शरीरेण सह प्रतिछन्नं दग्धव्यम् मम हिता दारकेषु अप्रमत्ता भवेथाः। अतोऽन्यं किंचन सन्देष्टव्यं न प्रपश्यामि।

इत्युक्त्वा! मद्रराजसुता यशस्विनी तं * चिन्ताग्निस्थं नरर्षभं तूर्णमन्वारोहत्।

वैशम्पायन उवाच—"ततो देवकल्पा सर्वे मन्त्रविदो महर्षयः पाण्डोरुपरमं दृष्ट्वा मिथः मन्त्रयाञ्चक्रिरे।

तापसा ऊचुः—" स महायशाः महात्मा राज्यं च राष्ट्रं च हित्वा, अस्मिन् स्थाने तपः तप्त्वा, तापसान् शरणं गतः। स राजा पाण्डुः जातमात्रान् पुत्रांश्च दारांश्च इह भवताम् उपनिधिं प्रदाय इतः स्वर्गं गतः। सुमहात्मनः तस्येमान् आत्मजान्, देहं, भार्यां च

* चिता इति तु असंगतः पाठः १२५-३१

गृहीत्वा*१ स्व राष्ट्रं गच्छामः ! धर्म एषो हि नः स्मृतः ।

वैशम्पायन उवाच—ते देवकल्पा, उदारमनसः, सिद्धा महर्षयः परस्परम् आमन्त्र्य, भीष्माय, धृतराष्ट्राय चैव हि पाण्डवान् दातुं, पाण्डोः पुत्रान् पुरस्कृत्य नागसाह्वयं नगरं गन्तुं*मनः चक्रिरे । तस्मिन्नेव क्षणे सर्वे तापसाः तान् पाण्डोः दारान् च पुत्रान् च ते च शरीरे आदाय प्रतस्थिरे । सा पुत्र-वत्सला पुरा सततं सुखिनी भूत्वा दीर्घम् अहवानं प्रपन्ना तत् संक्षिप्तम् अमन्यत । सा यशस्विनी तु अदीर्घेण कालेन कुरु-जांगलम् सम्प्राप्तः वर्धमान-पुरद्वारम् आससाद । तापसाः च द्वारिणम् ऊचुः—"राजानं प्रकाशय" क्षणेनैव गत्वा तु ते सभायां विनिवेदिताः ।

तदा नागपुरे चारणा सहस्राणां मुनीनाम् (च) आगमनम् श्रुत्वा नृणाम् विस्मयः समपद्यत । मुहूर्तोदिते आदित्ये सदाराः बाल-पुरस्कृताः सर्वे पुरवासिनः तापसान् द्रष्टुं निर्ययुः । यान-संघ-समास्थिताः स्त्रीसङ्घाः, क्षत्रसङ्घाः, ब्राह्मणैः, सह ब्राह्मणानां च योषितः निर्जग्मुः । तथा विट्-शूद्र-सङ्घानां महान् व्यतिकरः अभवत् । न कश्चित् ईर्ष्याम् अकरोत् ( सर्वे ) धर्म-बुद्धयः अभवन् ।

---

*१गृह्य इत्यार्षः प्रयोगः १२६ ४

* गमने ,, ,, १२६-४

तथा शान्तनवः भीष्मः सोमदत्तः अथ बाह्लिकः, प्रज्ञाचक्षुः राजर्षिः च स्वयं चत्ता च विदुरः, सा च देवी सत्यवती, यशस्विनी च कौशल्या, राजदारैः परिवृत्ता च गान्धारी अपि निर्ययुः । चित्रैः भूषणैः भूषिताः शतसंख्याः दुर्योधन-पुरोगमाः धृतराष्ट्रस्य दायादाः विनिर्ययुः । सपुरोहिताः सर्वे कौरव्याः तान् महर्षिगणान् दृष्ट्वा शिरोभिः अभिवाद्य उपोपविविशुः । तथैव सर्वे पौरजानपदा अपि भूमौ शिरसा अभिवाद्य प्रणाम्य च उपोपविशुः ।

तदा सर्वशः तम् जनौघम् अकूजं अभिज्ञाय, भीष्मः यथा—न्यायं पाद्येन अर्घ्येण च पूजयित्वा महर्षिभ्यः राज्यं राष्ट्रं च न्यवेदयत् ।

अथो तेषाम् वृद्धतमः जटाजिनी महर्षिः प्रत्युत्थाय ऋषीणाम् मतम् आज्ञाय इदम् अब्रवीत्—"यः सः कौरव्य-दायादः पाण्डुर्नाम नराधिपः दिव्येन हेतुना काम भोगान् परित्यज्य इतः शतशृङ्गम् गतः" तस्य ब्रह्मचर्य-व्रतस्थस्य तत्र धर्मात् साक्षात् अयं पुत्रः युधिष्ठिरः जातः । तथा तस्य महात्मनः राज्ञः बलिनां श्रेष्ठम् महाबलं भीमम् नाम पुत्रं मातरिश्वा ददौ । कुन्त्यामेव अयं धनञ्जयः पुरुहुताद् जज्ञे यस्य कीर्तिः सर्वान् महेष्वासान् अभिभविष्यति । माद्री तु

यौ महेष्वासौ पुरुषोत्तमौ पुरुषव्याघ्रौ अश्विभ्याम् असूत तौ इमौ अपि पश्यत । वनवासं चरता धर्मनित्येन यशस्विना पाण्डुना नष्टः पैतामहो वंशः पुनः उद्धृतः । पाण्डोः पुत्राणां जन्म वृद्धिं च वैदिकानि अध्ययनानि च सततं पश्यन्तः पराम् प्रीतिम् अवाप्स्यथ । पुत्रलाभम् अवाप्य सतां वृत्ते वर्त्तमानः पाण्डुः सप्तदशे अहनि इतः पितृलोकं गतः । सा माद्री अनुव्रता तेनैव सह पतिलोकं गता । परन्तप ! इमे तयोः द्वे शरीरे इमे च तयोः वराः पुत्राः मात्रा सह क्रियाभिः अनुगृह्यन्ताम् । कुरु-कुलोद्वहः महायशाः सर्व-धर्मज्ञः पाण्डुः प्रेत-कार्यें निवृत्ते पितृमेधं लभताम्" ।

वैशम्पायन उवाच–"गुह्यकैः सह सर्वे तापसाः सर्वान् कुरून् एवं उक्त्वा कुरूणामेव पश्यताम् क्षणेन अन्तर्हिताः ।

धृतराष्ट्र उवाच—"विदुर ! राजसिंहस्य पाण्डोः माद्र्याः च एव विशेषतः सर्वाणि प्रेत-कार्याणि राजवत् कारय । पाण्डोः माद्र्याश्च पशून् वासांसि रत्नानि विविधानि धनानि च येभ्यो यावत् च वाञ्छितम् प्रयच्छ । कुन्ती च यथा माद्र्याः सत्कारं कुर्यात् तथा कुरु । यथा न वायुः न आदित्यः ताम्

सुसंवृताम् पश्येताम् । यस्य वीराः पंच-सुरसुतोपमाः सुताः जाताः सः प्रशस्यः । अनघ ! नराधिपः पाण्डुः न शोच्यः" ।

वैशम्पायन उवाच—"भारत ! विदुरः तथेति उक्त्वा भीष्मेण सह परम-पूजिते देशे पाण्डुं संस्कारयामास । राजन् ! ततः पाण्डोः पुरोहितैः नगरात् तूर्णम् आज्य-गन्ध-पुरस्कृताः दीप्ताः पावकाः निहृताः । अथ ताम् शिविकाम् आर्त्वैः विविधैः वरैः पुष्पैः गन्धैः च अलंकृत्य सर्वशः वाससा आच्छाद्य, महाधनैः माल्यैः वासैभिश्च शोभिताम् ताम् ज्ञातयः तथा अमात्याः सुहृदश्च उपतस्थिरे । नरयुक्तेन परमालंकृतेन यान-मुख्येन माद्र्या सह सुसंवृतम् तम् नृसिंहम् अवहन् । ततः पाण्डुरेण आतपत्रेण चामर-व्यजनेन च सर्व-वादित्रनादैश्च समलंचक्रिरे । अथ कौरवस्यार्थे शुभ्राणि छत्राणि वृहन्ति च चामराणि रुचिराणि च वासांसि आजहुः । शुक्लवासोभिः याजकैः हूयमानाः दीप्यमानाः स्वलंकृताः हताशनाः तस्य अग्रतः अगच्छन् । सहस्रशः ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राः चैव शोक संतप्ताः रुदन्तः—

अयमस्मान् अपहाय दुःखे चाधाय शाश्वते ।
कृत्वा चास्मान् अनाथांश्च क्व यास्यति नराधिपः

इति क्रोशन्तः, सर्वे च पाण्डवाः भीष्मो विदुरः एव च नराधिपम् अनुजग्मुः ।

अथ स-भार्यस्य अक्लिष्टकर्मणः नृसिंहस्य सत्य-वादिनः पाण्डोः ताम् शिविकाम् रमणीये गङ्गा-तीरे समये शुभे वनोद्देशे न्यासयामासुः । ततः तस्य शरीरं सर्व-गन्धाधिवासितम् शुचि-कलियका-दिग्धम् दिव्य-चन्दन-रुषितं शतकुम्भमयैः घटैः जलेन आशु पर्यषिन्चन् । कालागुरु-विमिश्रेण तुङ्गरसेन, शुक्लेन, चन्दनेन च सर्वतः समालेपयन् । अथ एनम् देशजैः शुक्लैः वासोभिः समयोजयन् । वासोभिः संच्छन्ना महार्हशयनोचितः जीवन् नराधिपः इव स नरव्याघ्रो शुशुभे । याजकैः अभ्यनुज्ञाते प्रेत-कर्मणि अनुष्ठिते माद्र्या सह स्वलंकृतम् घृतावसिक्तं राजानम् तुङ्ग-पद्मक मिश्रेण सुगन्धिना चन्दनेन अन्यैश्च विविधैः (काष्ठैः) विधिना समदाहयन ।

तदा तयोः द्वे शरीरे दृष्ट्वा मोहवश गताः हा हा पुत्रेति (क्रोशन्ती) कौशल्या सहसा भुवि पपात । पौरजानपदो जनः राजभक्त्या कृपन्वितः दुख संतप्तः ताम् आर्ताम् पतिताम् प्रेक्ष्य रुरोद । कुन्त्याः च एव आर्त नादेन मानुषैः-सह सर्वाणि तिर्यग्योनिगतान्यपि भूतानि विचुक्रुशुः । तथा शान्तनवो भीष्मः महामतिः विदुरश्च

कौरवाश्चैव सर्वशः भृशदुःखिताः प्रारुदन् । ततो भीष्मः विदुरः, राजा च पाण्डवैः सह सर्वाश्च कुरु-योषितः तस्य (भस्मनि) उदकम् चक्रिरे तान् शोककर्षितान् कृतोदकान् पाण्डवान् आदाय शोचमानाः सर्वाः प्रकृतयः न्यवारयन् । यथा पाण्डवाः बान्धवैः सह भूमौ सुषुपुः तथैव ब्राह्मणादयः नागराः शिश्यिरे । द्वादश क्षपाः पाण्डवैः सार्धं नगरम् आ कुमारं तद्गतानन्दम् अस्वस्थम् अहृष्टवत् बभूव ।

इति श्री महाभारते शतसाहस्र्याम् संहितायां पाण्डुदाहः

# सत्यवत्याः स्नुषयोःच वानप्रस्थः ।

वैशम्पायन उवाच—"तदा श्राद्धावसाने तु तं जनं दुःखितं, मातरं (च) दुःखशोकार्तां संमूढां दृष्ट्वा व्यासो अब्रवीत्—

अतिक्रान्त-सुखाः कालाः, पर्युपस्थित दारुणाः ।
श्वः श्वः पापिष्ठ-दिवसाः पृथिवी गत-यौवना ॥
बहु-माया-समाकीर्णो नाना-दोष-समाकुलः ।
लुप्त-धर्म-क्रियाचारो, घोरः कालो भविष्यति ॥
१२८—६,७

कुरूणाम् अनयात् चापि पृथिवी न भविष्यति । तपोधने ! त्वं गच्छ ! योगम् आस्थाय युक्ता वस । आत्मनः अस्य कुलस्य घोरं संक्षयं मा द्राक्षीः ।"

सा तथा इति समनुज्ञाय, प्रविश्य (अन्तः) स्नुषाम् अब्रवीत्—"अम्बिके ! तव पुत्रस्य दुर्नयात् किल सानुबन्धाः भारताः, पौराःच विनङ्क्ष्यन्ति एवेति नः श्रुतम् । ते भद्रम् (अस्तु) यदि मन्यसे ! तत् इमाम् आर्तां पुत्रशोकाभिपीडितां कौशल्याम् आदाय वनं गच्छामि ।"

भारत ! अम्बिकया तथा इत्युक्ता * सुव्रता सत्यवती भीष्मम् आमन्त्र्य स्नुषाभ्यां सह वनं ययौ ।

भरत सत्तम ! तदा ताः देव्यो सुघोरं तपस्तप्त्वा, महाराज ! देहं त्यक्त्वा, इष्टां गतिं ययुः ।

---

*उक्त्वा इति तु आर्षः प्रयोगः १२८ । १२

# पाण्डवानां बाल्यम्

अथ वेदोक्तान् संस्कारान् पाण्डवाः आप्तवन्तः। तदा ते पितृ-वेश्मनि भोगान् भुञ्जानाः संव्यवर्धन्त। धार्तराष्ट्रैः च सहिताः सुखं क्रीडन्तो, मुदिताः सर्वासु बालक्रीडासु तेजसा विशिष्टाः अभवन्। जवे लक्ष्याभि-हरणे, भोज्ये, पांसु-विकर्षणे सः भीमसेनः सर्वान् धार्त-राष्ट्रान् परिमर्दति। राजन्! (सः) पाण्डवः हर्षात् क्रीड-मानान् तान् गृहीत्वा *१ निलीयते, शिरःसु विनिगृह्य एतान् योधयामास। वृकोदरः न अतिकृच्छ्राद् एक एव तेषां महौजसां कुमाराणाम् एकोत्तरं शतं निगृह्णाति। बली एनान् बलात् विनिहत्य, कचेषु च निगृह्य दृष्ट-जानु-शिरो-सकान् क्रोशतो भूमौ चकर्ष। जले क्रीडन् स भुजाभ्यां दशबालान् परिगृह्य सलिले मग्न आस्ते, मृतकल्पान् विमुञ्चति। यदा ते वृक्षम् आरुह्य फलानि विचिन्वन्ति तदा भीमः पाद-प्रहारेण द्रुमान् कम्पयते। ततः प्रहार-वेगाभिहताः द्रुमाः व्याघूर्णिताः, त्रस्ताः कुमारकाः द्रुतं सफलाः प्रपतन्तिस्म। ते कुमाराः वृको-दरं स्पर्धमानाः न नियुद्धे, न जवे, न योग्यासु कदाचन उत्तरं चक्रुः। स वृकोदरः एवं धार्तराष्ट्रान् स्पर्धमानः बाल्यात् अत्यन्तम् अप्रियेऽतिष्ठत्, न द्रोह-चेतसा।

---

* १ गृह्य इति तु आर्षः प्रयोगः १२८।१

ततः प्रतापवान् धार्तराष्ट्रः भीमसेनस्य तत् अतिख्यातं बलं ज्ञात्वा दुष्ट-भावम् अदर्शयत्।

तस्य धर्माद् अपेतस्य, पापानि परिपश्यतः।
महोद् ऐश्वर्यलोभाच् च, पापा मतिर् अजायत ॥
१२८-६

अयं कुन्ती-पुत्रो वृकोदरः बलवतां श्रेष्ठः, पाण्डु-पुत्राणां मध्यमः, निकृत्या संनिगृह्यताम्।

एको वृकोदरः प्राणवान् विक्रमी महता शौर्येण अन्वितः अस्मान् सहितान् चापि स्पर्द्धते। उद्याने पुरा संसुप्तं तु गंगायां प्रक्षिपामहे। अथ तस्माद् अवरजं श्रेष्ठं युधिष्ठिरं प्रसह्य बन्धने बध्वा वसुन्धरां प्रशासिष्ये। तदा स पापो दुर्योधनः एवं निश्चयं कृत्वा महात्मनो भीमस्य नित्यमेव अन्तरप्रेक्षी आसीत्।

भारत ! ततः तत्र जलविहारार्थं विचित्राणि महान्ति च, सर्वकामैः सम्पूर्णानि, पताकोच्छ्रायवन्ति, नानागाराणि अनेकशः चैल-कम्बल-वेश्मानि सञ्जनयामास। भारत ! प्रमाणकोट्यां स्थलं कञ्चित् उपेत्य उदक-क्रीडनं नाम तं देशं कारयामास। तत्र सूदकर्मणि कुशलैः नरैः भक्ष्यं भोज्यं च पेयं च चोष्यं च अथापि लेह्यम् उपपादितम्। तदा तत्पुरुषाः वै धार्तराष्ट्राय न्यवेदयन्। ततो दुर्मतिः दुर्योधनः तत्र पाण्डवान् आह—"उद्यान-वन-शोभितां गंगां चैव सर्वे भ्रातरः सहिताः अनुयास्यामः, जलक्रीडाम्

अवाप्नुमः।" युधिष्ठिरः चापि तम् 'एवमस्तु' इति प्रत्युवाच।

ते शूराः कौरवाः पाण्डवैः सह नगराकारैः देशजैः रथैः गजोत्तमैः (च) नगरात् निर्ययुः। तदा उद्यानवनम् आसाद्य, महाजनं च विसृज्य वीराः गिरेः गुहां सिंहाः इव विशन्ति स्म। ते सर्वे भ्रातरः शुभ्रैः उपस्थान-गृहैः वलभिभिः शोभितं, तथा गवाक्षैः जालैः साश्चारिकैः यन्त्रैरपि संमार्जितम्, सौधकारैः चित्रकारैः, पूर्णाभिः दीर्घिकाभिः तथा पुष्करिणीभिः, चित्रितम् उद्यानम् अभिपश्यन्तः ते सर्वे पाण्डवाः कौरवाश्च तत्र प्रविष्टाः। तथा तज्जलं फुल्लैः जलरुहैः छन्नं तथा यथर्तुकैः पुष्पैः उपछन्ना वसुमती शुशुभे।

अथ तस्मिन् उद्यानवरे तत्र प्रविष्टाः सर्वे पाण्डवाः कौरवाश्च उपछन्नान् बहून् कामान् भुञ्जन्ति। तथा च ततस्ततः ते क्रीडागताः परस्परस्य वक्त्रेषु*१ भक्ष्यान् ददुः। ततः पापो दुर्योधनः भीमसेन-जिघांसया भक्ष्ये कालकूटकं विषं प्रक्षेपयामास। अथ पापकृत् हृदयेन क्षुरोपमः वाचा चामृतकल्पः भ्रातृवच्च यथा सुहृत् स्वयं भीमस्य बहु-भक्ष्यं*प्रक्षिपते। तं दोषम् अजानता भीमेन प्रतीक्षितम्*२। ततः तत्र पुरुषाधमः दुर्योधनः हृदयेन हसन् इव आत्मानं

१* वक्त्रेभ्यः इत्यार्षः प्रयोगः यद्वा 'वक्त्राणि व्यादाय' इति अवगन्तव्यम्।

२* स्म इत्यनर्थकः पाठः। १२८-४४

कृतकृत्यमिव मन्यते। तदा ते मुदितमानसाः धार्तराष्ट्राः पाण्डवाश्च सर्वे सहिताः जलक्रीडाम् अकुर्वत। दिवसान्ते क्रीडावसाने ते कुरूद्वहाः वीराः शुचिवस्त्राः स्वलङ्कृताः, विहृत्य परिश्रान्ताः विहारावसथेषु एव वासम् अरोचयन्। तदा बलवान् भीमो अभ्यधिकं व्यायम्य खिन्नः प्रमाण-कोट्यां वासार्थी जलक्रीडा-गतान् तान् कुमारान् वाहयित्वा तत् स्थलम् सुष्वाप। पाण्डुनन्दनः श्रान्तः शीतं वातं समासाद्य मदविमोहितः विषेण च परीताङ्गः निश्चेष्टः (बभूव)।

ततः दुर्योधनः स्वयं भीमं लतापाशैः बद्ध्वा, तदा मृतकल्पं वीरं स्थलात् जलम् अपातयत् अथ स पाण्डवो निःसंज्ञो जलस्यान्तम् अविशत्। तदा नागभवने नाग-कुमारान् आक्रामत्। ततस्तदा बहुभिः महाविषैः महादंष्ट्रैः विषोल्वणैः नागैः समेत्य भीमः भृशं अदश्यत। ततोऽस्य दश्यमानस्य तत्कालकूटकं स्थावरं विषं जङ्गमेन तु सर्पविषेण हृतम्। तेषां दंष्ट्रिणां दंष्ट्राः मर्मसु अपि निपातिताः अस्य पृथुवक्षसः त्वचं सारत्वात् नैव विभिदुः। ततः प्रबुद्धः कौन्तेयः सर्वबन्धनं संछिद्य सर्वान् पोथयामास। केचित् भीताः प्रदुद्रुवुः।

ततः ते सर्वे कौरवाः पाण्डवाः च वृत्तक्रीडाविहारास्तु भीमं विना रथैः गजैः अश्वैः अन्यैः च अनेकशः यानैः

'भीमसेनस्तु नः अग्रतः एव यातः' (इति ब्रुवन्तः) गज-साह्वयम् प्रतस्थिरे*।

ततः पापो दुर्योधनः तत्र वृकोदरं अपश्यन् हृष्टः भ्रातृ-भिः सहितः नगरं ह प्रविवेश।

युधिष्ठिरस्तु धर्मात्मा, ह्यविदन् पापमात्मनि।
स्वेनानुमानेन परं साधुं समनुपश्यति॥

आ० प० १२६।४

तदा सः भ्रातृवत्सलः पार्थः मातरं कुन्तीम् अभ्येत्य अभिवाद्य अब्रवीत्—"अम्ब! भीम इह आगतः! मातः! क्व गतो भविता। शुभे! तम् इह न पश्यामि। तदर्थम् उद्यानानि वनं चैव समन्ततः विचितानि न च तं वीरं वृकोदरं ह दृष्टवन्तः। ततः सर्वे, "सः नः पूर्वमेव यातः' मन्यमानाः व्याकुलेन अन्तरात्मना इह आगताः स्म। महाभागे! आगम्य क्व नु गतः? त्वया वा क्व नु प्रेषितः? यशस्विनि! भीमसेनं महाबाहुं कथयस्व। शोभने! तम् वीरं प्रति मे भावाः नहि शुध्यते! यतः अहम् भीमं प्रसुप्तं न मन्ये इति सः तु हतः।"

इत्युक्ता धीमता धर्म-राजेन कुन्ती 'हा' 'हा' इति कृत्वा संभ्रान्ता युधिष्ठिरं प्रत्युवाच—"पुत्र! भीमं न पश्यामि। असौ माम् न अभ्येति, इति तस्य अन्वे-

*प्रतस्थुः इत्यार्षः पाठः। १२६।१

पणे अनुजैः सह शीघ्रं यत्नं कुरु"।

इति उक्त्वा ज्येष्ठं तनयं विदूयमानेन*१ हृदयेन क्षत्तारम् आनाय्य वचनम् अब्रवीत्—"भगवन् क्षत्तः! भीमसेनः क्व गतः। न दृश्यते। सर्वे भ्रातरः भ्रातृभिः सह उद्यानात् निर्गताः तत्र एकः महाबाहुः भीमस्तु माम् इह न अभ्येति। सः दुर्योधनस्य सदा चक्षुः न प्रीणयते। सः दुर्मतिः क्रूरः, क्षुद्रः, राजलुब्धः, अनपत्रपः जातमन्युः, सुयोधनः तम् वीरं निहन्यात् अपि। तेन मे चित्तं व्याकुलं, हृदयं च दहति*२ इव"।

विदुर उवाच—"कल्याणि! मैवं वद*३। शेष-संरक्षणं कुरु। दुरात्मा प्रत्यादिष्टोहि तव शेषे अपि प्रहरेत्। तव सुताः दीर्घायुषः यथा महामुनिः उवाच। ते पुत्रः आगमिष्यति, प्रीतिं च उत्पादयिष्यति"।

वैशम्पायन उवाच—"विद्वान् विदुरः एवम् उक्त्वा स्वं निवेशनं ययौ। कुन्ती चिन्ता-परा भूत्वा गृहे सुतैः सह आसीना। ततः कौन्तेयः महाबलः महाबाहुः भीमसेनः उत्थाय अञ्जसा मातुः अन्तिकम् आजगाम। ततः अरिविमर्दनः जननीं ज्येष्ठं भ्रातरम् एव च अभिवाद्य

१*द्यविदूयता इति परस्मै पद प्रयोगः आर्षः १२६।१२।
२*दह्यति इति आर्षः प्रयोगः १२६।१६
३*वदस्व इति आर्षः प्रयोगः १२६।७१।

कनीयसः शिरःसु समाघ्राय, मात्रा सह नरर्षभैः तैः च अपि अन्यो-अन्य-गतसौहार्दात् सः परिष्वक्तः । दिष्ट्या, दिष्ट्या इति च अब्रुवन् । महाबल-पराक्रमः भीमसेनः च तत्सर्वं दुर्योधन-विचेष्टितम् भ्रातॄन् *१ आचष्टे । ततः राजा युधिष्ठिरः भीमम् अर्थवद् वचः आह—"तूष्णीं भव । इदं कार्यं ते कथंचन न जल्प्यम् । ततः प्रभृतिः अतन्द्रिताः कौन्तेयाः अन्यो अन्यं रक्षत" । महाबाहुः धर्मराजः युधिष्ठिरः एवम् उक्त्वा तदा सर्वैः भ्रातृभिः सहितः अप्रमत्तः अभवत् । (दुर्योधनः) अस्य सारथिं च दयितम् अपहस्तेन जघ्निवान् । तदा धर्मात्मा विदुरः तेषाम पार्थानाम् मतिं प्रददौ ।

भीमसेनस्य भोजने पुनः कालकूटं नाम तीक्ष्णं लोम-हर्षणं संभृतं विषं प्राक्षेपयत् । पार्थनाम् हित-काम्यया वैश्या-पुत्रः तत् आचष्ट । वृकोदरः तत्रापि भुक्त्वा अविकारं अजरयत् । तत् तीक्ष्णम् अपि विषं विकारं न हि अजनयत्, भीमे भीम-संहनने वृकोदरे अजीर्यत । एवं दुर्योधनः, कर्णः, सौबलः शकुनिः चापि तान् पाण्डवान् अनेकैः अभ्युपायैः जिघान्सन्ति स्म । विदुरस्य मते स्थिताः उद्भावनम् अवकुर्वन्त । अमर्षिताः पाण्डवाः अपि तत् सर्वं प्रत्यजानन् ।

*१इति श्रीमहाभारते शतसाहस्र्यां पाण्डवानां बाल्यम् ।

भ्रातॄणाम् इति आर्षःप्रयोगः १२१–३२

## द्रोणशिष्यपरीक्षा

वैशम्पायन उवाच—'नरर्षभ ! भीष्मः पौत्राणां विनयेप्सया विशेषार्थी इष्वस्त्रज्ञान् वीर्य-सम्मतान् आचार्यान् पर्यपृच्छत्। न अल्पधीः, न अमहाभागः, न अनस्त्रकोविदः, तथा न अदेव-सत्वः, महाबलान् कुरून् अस्त्रैः विनयेत् इति सदा संचिंत्य भरत-सत्तमः गाङ्गेयः वेदविदुषे भारद्वाजाय धीमते द्रोणाय पाण्डवान् कौरवान् चैव शिष्यान् ददौ। तेन महात्मना भीष्मेण सः अस्त्र-विदुषांवरः महाभागः पूजितः तुष्टः एव च।

ततः भीष्मेण संपूजितः द्विपदां वरः महातेजाः द्रोणः कुरु-वेश्मनि विशश्राम। अथ तस्मिन् गुरौ विश्रान्ते भीष्मः पौत्रान् कौरवान् आदाय शिष्यत्वेन (ददौ) विविधानि च वसूनि धनधान्य-समाकुलं सुपरिच्छन्नं च गृहं, सुप्रीतः प्रभुः भारद्वाजाय प्रत्यपादयत्। सः मुदितमानसः महेष्वासः द्रोणः तान् कौरवान् धार्तराष्ट्रान् पाण्डवान् च शिष्यान् प्रतिजग्राह। तान् सर्वान् प्रतिगृह्य च प्रीतात्मा द्रोणः रहसि कृतोपसदनान् एकं वचनम् अब्रवीत्।

"कार्यं मे वांछितं किंचिद् हृदि सम्परिवर्तते।
कृतास्त्रैः तत् प्रदेयं मे तद् एतद् वदतानघाः॥

आ० प० १३४।६

वैशम्पायन उवाच—"विशाम्पते! कौरवेया तत् श्रुत्वा तूष्णीम् आसन्। ततः परन्तपः अर्जुनस्तु सर्वं प्रतिजज्ञे। ततः तदा अर्जुनं मूर्धनि समाघ्राय तदा पुनः पुनः प्रीति-पूर्वं परिष्वज्य मुदा प्ररुरोद।

ततः वीर्यवान् द्रोणः पाण्डु-पुत्रान् विविधानि दिव्यानि मानुषानि च अस्त्राणि ग्राहयामास। वृष्णयः च, अन्धकाश्च नानादेश्याः पार्थिवाः चैव ततः राजपुत्राः तथा च अन्ये समेत्य अस्त्रार्थे द्विज-सत्तमं द्रोणम् अभिजग्मुः तदा सूत-पुत्रश्च गुरुं द्रोणम् इयात्। अत्यमर्षणः सूतपुत्रः पार्थाय *१ स्पर्धमानः तु दुर्योधनं समाश्रित्य पाण्डवान् अवामन्यत *२।

तेषु सर्वेषु शिक्षाभुज-बलोद्योगैः पाण्डवाः (वि-शिष्टः, अभवन्। अस्त्रविद्यानुरागात् च अर्जुनः विशिष्टः अभवत्। सर्वेषाम् एव शिष्याणाम् तुल्येषु अस्त्र—प्रयो-गेषु लाघवे सौष्ठवेषु च अर्जुनः अभ्यधिको बभूव। द्रोणः ऐन्द्रिम् उपदेशेषु अप्रतिमम् अमन्यत। एवं सर्व-कुमाराणाम् इष्वस्त्रं प्रत्यपादयत्।

सर्वेषाम् चिरकारणात् कमण्डलुम् प्रायच्छत्। पुत्राय च अविलम्बन-कारणात् कुम्भं ददौ। यावत् ते न उपगच्छन्ति

*१ पार्थेन इति आर्षः प्रयोगः। १३४।१२

*२ अवमन्यत इति आर्षः प्रयोग। १३४।१२

तावत् द्रोणः अस्मै पुत्राय परां क्रियाम् आचष्ट। जिष्णुः तत् कर्म औहत। ततः सः फाल्गुणः वारुणास्त्रेण कमण्डलुम् पूरयित्वा आचार्य-पुत्रेण समम् अभ्येति। मेधावी अस्त्रविदांवरः पार्थः अपि तस्मात् आचार्य-पुत्रात् तु विशेषोपचये पृथक् न व्यवहीयत। अर्जुनः गुरुपूजने परमं यत्नम् आतिष्ठत। अस्त्रे च परमम् योगम्। द्रोणस्य च प्रियो अभवत्।

इष्वस्त्रं प्रति तं फाल्गुणं नित्यम् उद्युक्तं दृष्ट्वा द्रोणो रहः सूदम् आहूय वचनं अभाषत। त्वया*अन्धकारे अर्जुनाय कदाचन अन्नं न देयम् न च त्वया इदं मम-वाक्यम् विजये आख्येयम्। ततः कदाचित् अर्जुने भुञ्जाने वायुः प्रववौ। तेन तत्र दीप्यमानः स प्रदीपः विलोपितः। कौन्तेयः भुङ्क्ते एव, तस्य तेजस्विनः हस्तः अनुग्रह-कारणात् आस्याद् अन्यत्र न वर्तते। स महाबाहुः पाण्डुनन्दनः पाण्डवः तद् अभ्यासकृतं मत्वा रात्रावपि धनुषा योग्यां चक्रे।

भारत! तस्य ज्या-तल-निर्घोषं द्रोणः शुश्राव। एनम् अपेत्य, उत्थाय, परिष्वज्य इदम् अब्रवीत्।

द्रोण उवाच—"तथा कर्तुं प्रयतिष्ये, यथा अन्यो धनुर्धरः त्वत्समः लोके न भविता, एतत् ते सत्यं

*ते इत्यार्षः प्रयोगः। १३४।२३

ब्रवीमि ।"

वैशम्पायन उवाच—"ततो द्रोणः अर्जुनं भूयः हयेषु च, गजेषु च, रथेषु भूमौ अपि च रण-शिक्षाम् अशिक्षयत् ।

द्रोणो गदा-युद्धे, असि-चर्यायां, तोमर-प्रास-शक्तिषु, संकीर्ण-युद्धे च कौरवान् शिक्षयामास । सहस्रशः राजानो राजपुत्राः च तत्कौशलं श्रुत्वा समाजग्मुः ।

महाराज ! ततो हिरण्य-धनुषः निषाद-राजस्य सुतः ऐकलव्यः द्रोणम् अभ्याजगाम ह । धर्मज्ञः तेषाम् एव अन्ववेक्षया, नैषादिः इति चिन्तयन् धनुषि तं शिष्यं न प्रतिजग्राह । स परन्तपः तु द्रोणस्य पादौ शिरसा गृहीत्वा* आरण्यं अनु-संप्राप्य, द्रोणं महीमयं कृत्वा, तस्मिन् आचार्य-वृत्तिं च परमम् आस्थितः. तदा परमम् नियमम् आस्थितः इष्वस्त्रे योगम् आतस्थे ।

सः परया श्रद्धया उपेतः, परमेण योगेन विमोक्षा-दान-संधाने परं लघुत्वम् आप ।

अरिमर्दन ! अथ कदाचित् द्रोणाभ्यनुज्ञाताः सर्वे कुरुपाण्डवाः मृगयां रथैः विनिर्ययुः । तत्र यदृच्छया कश्चित् नरः उपकरणं गृहीत्वा*श्वानं च आदाय पाण्डवान् एकः अनुजगाम ।

तत्र तत्तत्कर्म-चिकीर्षया तेषां विचरतां स मूढः

*गृह्य इत्यार्षः प्रयोगः । १३४।३४

श्वा वने चरन् नैषादिं प्रति जग्मिवान् । स श्वा कृष्णा-मल-दिग्धाङ्गं, कृष्णाजिन- जटाधरं नैषादिं समालक्ष्य, भषन् तदन्तिके तस्थौ ।

अथ तदा तस्य भषतः शुनः मुखे, अस्त्रे लाघवं दर्शयन् युगपत् सप्त शरान् मुमोच । यथा तु स श्वा शरपूर्णास्यः पाण्डवान् आजगाम ह। तं*१तु दृष्ट्वा पाण्डवाः वीराः परं विस्मयम् आगताः । तदा तत् परमं लाघवं शब्दवेधित्वं दृष्ट्वा, तं च प्रेक्ष्य व्रीडिताः आसन् । सर्वशः च प्रशशंसुः ।

राजन् ! ततः ते तं वनवासिनं वने अन्वेषमाणाः पाण्डवाः तम् अनिशं शरान् अस्यन्तं ददृशुः । तथा तदा च ते एनं विकृतदर्शनं न अभिजानन्तः*एनं परिपप्रच्छुः— "को भवान् ? कस्य वा ? इति उत ।"

एकलव्य उवाच—"वीराः ! मां निषादाधिपतेः हिरण्य-धनुषः सुतं, द्रोण-शिष्यं च, धनुर्वेद-कृत-श्रमं, वित्त ।"

वैशम्पायन उवाच—ते पाण्डवाः तं तत्त्वेन आज्ञाय, पुनः आगम्य, द्रोणाय वने यथा-वृत्तं सर्वम् अद्भुतम् आचख्युः । राजन् ! कौन्तेयः अर्जुनः एकलव्यम्

---

*१स इत्यार्षः प्रयोगः १३४।४२
*अभिजानन् इत्यार्षः प्रयोगः १३४।४२

अनुस्मरन्, रहो द्रोणं समासाद्य प्रणयाद् इदम् अब्रवीत्।

अर्जुन उवाच—"तदाहम् एकः भवतः परिरभ्य प्रीतिपूर्वम् इदं वचः उक्तः, न मे शिष्यः त्वद् विशिष्टो भविष्यति।

अथ कस्माद् मद्विशिष्टो लोकादपि च वीर्यवान्।
अन्योऽस्ति भवतः शिष्यो निषधाधिपतेः सुतः" ॥
१३४।५०

वैशम्पायन उवाच—द्रोणः मुहूर्तमिव तम् विनिश्चयं चिन्तयित्वा सव्यसाचिनम् आदाय नैषादिं प्रति जग्मिवान्*। मलदिग्धाङ्गं, जटिलं, चीरवाससं, धनुष्पाणिम्, अनिशं शरान् अस्यन्तम् एकलव्यं ददर्श। एकलव्यस्तु अन्तिकाद् आयान्तं तं द्रोणं दृष्ट्वा अभिगम्य, उपसंगृह्य, शिरसा महीं जगाम। ततः स निषादजः द्रोणं विधिवत् पूजयित्वा आत्मानं शिष्यं निवेद्य अग्रतः प्राञ्जलिः तस्थौ। ततो द्रोणः अब्रवीत्—"असि मे वीर!। मम वेतनं दीयताम्।"

एकलव्यस्तु तच्छ्रुत्वा प्रीयमाणः इदम् अब्रवीत्—

"किं प्रयच्छामि भगवन् आज्ञापयतु माम् गुरुः।
नहि किञ्चिद् अदेयं मे गुरवे ब्रह्मवित्तम॥
१३४।५६॥"

---

* जग्मिवान् इति कविराज संप्रदायः।

तम् अब्रवीत्—"त्वया दक्षिणो अंगुष्ठः दीयताम् इति।"

ऐकलव्यस्तु द्रोणस्य तद् दारुणं वचः श्रुत्वा सदा च सत्ये नियतः आत्मनः प्रतिज्ञां रक्षन् तथैव हृष्टवदनः, तथैव अदीन-मानसः अविचार्य तम् आत्मनः अंगुष्ठं छित्वा द्रोणाय प्रादात्। ततः नैषादिः तु अंगुलिभिः शरं व्यकर्षत्। नराधिप! स च तथा शीघ्रो नाभूत् यथापूर्वम्।

ततः अर्जुनः विगतज्वरः प्रीतमनाः बभूव। द्रोणः च सत्यवाग् आसीत् नान्यः अर्जुनम् अभिभविता।

तदा तु दुर्योधनः च भीमः च सदा संरब्धमानसौ द्रोणस्य शिष्यौ गदायोग्यौ बभूवतुः। अश्वत्थामा रहस्येषु अभ्यधिको अभवत्। ततः उभौ यमजौ अति-पुरुषानन्य-त्सारुकौ ( अभवताम् )। युधिष्ठिरः रथिश्रेष्ठः धनञ्जयः तु सर्वत्र। सागरान्तायां प्रथितः, रथयूथप-यूथपः सर्वास्त्रेषु बुद्धि-योग-बलोत्साहैः च निष्ठितः, अस्त्रे गुर्वनुरागे चार्जुनः विशिष्टो अभवत्। तुल्येषु अस्त्रोप-देशेषु सर्व-कुमाराणाम् एकः सौष्ठवेन वीर्यवान् अर्जुनः अतिरथो बभूव।

दुरात्मानो धार्तराष्ट्राः प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयं परस्परं न अमृष्यन्त।

पुरुषर्षभः द्रोणः प्रहरणज्ञाने जिज्ञासुः तान् सर्वान् सर्वविद्यास्त्रशिक्षितान् समानीय, कुमाराणाम् अविज्ञातं शिल्पिभिः कृतं कृत्रिमं भासं वृक्षाग्रे आरोप्य लक्ष्य-भूतम् उपादिशत् ।

द्रोण उवाच—"भवन्तः सर्वे अपि शीघ्रं धनूंषि आदाय सर्वशः भासम् एतं समुद्दिश्य तिष्ठत * । पुत्रकाः ! मद्वाक्यसमकालमस्य शिरः विनिपात्यताम् । एकैकशः नियोक्ष्यामि ।"

वैशम्पायन उवाच—"अंगिरसां वरः ततः पूर्वं युधिष्ठिरम् उवाच–दुर्धर्ष बाणं संधत्स्व । मम वाक्यान्ते तं विमुञ्च ।

ततः गुरुवाक्य-प्रचोदितः परमंतपः युधिष्ठिरः पूर्वं धनुः गृहीत्वा * भासं समुद्दिश्य तस्थौ ।

भरतर्षभ ! ततः स द्रोणः विततधन्वानं तं कुरुनन्दनं मुहूर्तात् इदं वचनम् उवाच–"नरवरात्मज ! त्वम् एनम् द्रुमाग्रस्थं भासं पश्य ।"

युधिष्ठिरः आचार्यं प्रत्युवाच–"पश्यामि" इत्येवम् ।

स द्रोणः मुहूर्ताद् इव पुनः तं प्रत्यभाषत–"अथ इमं वृक्षं, माम् वा, भ्रातॄन् वा, अपि प्रपश्यसि ।"

* तिष्ठध्वम् इत्यार्षः प्रयोगः । १३४।७०

* गृह्य इत्यार्षः प्रयोगः । १३४।७२

स कौन्तेयः तम् उवाच—"एनं वनस्पतिं, भवन्तं, तथा भ्रातॄन्, चेति पुनः पुनः पश्यामि"।

द्रोणः अप्रीतमनाः इव तम् उवाच—"अपसर! एतद् लक्ष्यं त्वया वेद्धुं न शक्यम् इत्येव कुत्सयन् इति।

ततः महायशाः तान् दुर्योधनादीन् धार्तराष्ट्रान् अन्यांश्च भीमादीन् शिष्यान् अन्यदेशजान् राज्ञः चैव तेनैव क्रमयोगेन जिज्ञासुः पर्यपृच्छत् * तथा च सर्वे तत् सर्वं पश्यामः, कुत्सितः।

ततः स्मयमानो द्रोणो धनञ्जयम् अभ्यभाषत—"विलोक्यताम्। त्वया इदानीम् एतत् लक्ष्यं प्रहर्तव्यम्। ते शरः मद्वाक्य-समकालमेव मोक्तव्यो भवेत्। पुत्र! तावत् मुहूर्तकम् कार्मुकं वितत्य तिष्ठ।"

गुरु-वाक्य-प्रचोदितः एवमुक्तः सव्य-साची मण्डलीकृतकार्मुकः भासं समुद्दिश्य तस्थौ।

मुहूर्ताद् इव द्रोणः तं प्रत्यभाषत—"अर्जुन! एनं स्थितं, भासं, द्रुमं, माम् अपि च पश्यसि!"

द्रोणं पार्थो अभ्यभाषत—"पश्यामिएकं भासम् इति।' भारत! न तु वृक्षं, भवन्तं वा पश्यामि इति।"

ततः प्रीतमना दुर्धर्षो द्रोणो मुहूर्तादिव पुनः पाण्डवानां महारथम् प्रत्यभाषत—'यदि एनं भासं

* पर्यपृच्छत इत्यार्षः प्रयोगः। १३४।७९

पश्यसि, तथा पुनः वचः ब्रूहि।"

सो अब्रवीत्—"भासस्य शिरः पश्यामि, न गात्रम् इति।"

द्रोणो हृष्ट-तनूरुहः अर्जुनेन एवमुक्तस्तु पार्थम् अब्रवीत्—"मुञ्चस्व।"

स, अविचारयन् मुमोच। ततः पाण्डवः नगस्थस्य शिर निशितेन क्षुरेण उत्कृत्य तरसा पातयामास।

तस्मिन् कर्मणि संसिद्धे, पर्यष्वजत पाण्डवम्।
मेने च द्रुपदं सङ्ख्ये सानुबन्धं पराजितम्॥

भरतर्षभ! अथ कस्यचित् तु कालस्य अङ्गिरसांवरः सशिष्यः गङ्गाम् अभितो मज्जितुं जगाम। अथ सलिले अवगाढं द्रोणं, बलवान् सलिलेचरः कालचोदितः ग्राहः जङ्घान्ते जग्राह। स समर्थोऽपि त्वरयन् इव मोक्षाय सर्वान् शिष्यान् अचोदयत्—'ग्राहं हत्वा माम् मोक्षयध्वम्" इति।

तद्वाक्य-समकालम् इतरे तु अथ संमूढाः तत्र तत्र प्रपेदिरे, बीभत्सुः तु अवार्यैः पञ्चभिः शरैः अम्भसि मग्नं ग्राहम् अताडयत्।

द्रोणः तं तु पाण्डवं क्रियोपेतं दृष्ट्वा सर्व शिष्येभ्यः विशिष्टम् अमन्यत। तदा प्रीतिमान् च अभवत्।

स ग्राहः महात्मनः जङ्घां त्यक्त्वा पार्थ-बाणैः

बहुधा खण्डशः परि-कल्पितः पञ्चत्वम् आपेदे ।

अथ भारद्वाजो महात्मानं महारथम् अब्रवीत्— "महाबाहो ! इमं विशिष्टम् अति-दुर्धरम्, संप्रयोग-निवर्तनम् अस्त्र-ब्रह्मशिरो नाम गृहाण ।

न च ते मानुषेष्व्एतत् प्रयोक्तव्यं कथंचन ।
जगद्विनिर्दहेदेतत् अल्प-तेजसि पातितम् ॥
असामान्यमिदं तात लोकेष्वस्त्रं निगद्यते ।

आ० प० १३५ । १६-२०

मम च इदं वचः शृणु । तत् प्रयतः धारयेथाः । वीर ! यदित्वां कश्चन अमानुषः शत्रुः आहवे बाधेत, तद्वधाय तद् इदम् अस्त्रं प्रयुञ्जीथाः ।"

सः कृताञ्जलिः बीभत्सुः तथा इति संप्रतिश्रुत्य परमास्त्रं जग्राह ।

तदा च एनं पुनः गुरुः आह—

भविता त्वत्समो नान्यः, पुमांल्लोके धनुर्धरः ।
अजेयः सर्व-शत्रूणां कीर्तिमांश्च भविष्यसि ॥

(इति श्री महाभारते शत साहस्र्यां द्रोण शिष्यपरीक्षा ।

———

# अस्त्र-प्रदर्शनम्

भारत राजन् ! द्रोणः धार्तराष्ट्रान् पाण्डु-पुत्रान् च कृतास्त्रान् दृष्ट्वा कृपस्य, सोमदत्तस्य, वाह्लीकस्य, धीमतः गाङ्गेयस्य, व्यासस्य, विदुरस्य च सान्निध्ये जनेश्वरं धृतराष्ट्रम् अब्रवीत्—कुरुसत्तम राजन् ! ते कुमाराः संप्राप्तविद्याः। राजन्। तव अनुमते ! ते स्वां शिक्षां दर्शयेयुः" ।

ततः महाराजः प्रहृष्टेन अन्तरात्मना अब्रवीत् द्विज-सत्तम ! भारद्वाज ! ते कृतम् महत्कर्म ! यदा यस्मिन् देशे यथा यथा कालम् अनुमन्यसे, तथा तथा विधा-नाय माम् स्वयम् आज्ञापयस्व । अद्य ये मे अस्त्रहेतोः पराक्रान्तान् पुत्रकान् द्रक्ष्यन्ति (तेषां) सचक्षुषां पुरुषाणां निर्वेदात् स्पृहयामि। क्षत्तः ! धर्मवत्सल !! यद्गुरुः आचार्यो ब्रवीति तत् तथा कुरु ! मन्ये ! न हि ईदृशं प्रियं भविता।

ततो विदुरो राजानम् आमन्त्र्य वहिः निर्गतः। महाप्राज्ञो भारद्वाजो समाम् अवृक्षाम् निर्गुल्माम् उदक-प्रस्रवणान्वितां मेदनीं मापयामास । तस्यां भूमौ वदतांवरः समाजे अवघुष्टे नक्षत्र-पूजिते तिथौ तदर्थं बलिं चक्रे । तस्य राज्ञः शिल्पिनः रङ्गभूमौ सुविपुलं यथा-

विधि-शास्त्रदृष्टं सुविहितं सर्वायुधोपेतं प्रेक्षागारं चक्रुः। नरर्षभ ! जानपदाः जनाः चैव तत्र विपुलान् उच्छ्रयोपेतान् स्त्रीणां मञ्चान् कारयामासुः।

ततः तदा तस्मिन् अहनि प्राप्ते ससचिवः राजा भीष्मं कृपम्, आचार्यसत्तमं प्रमुखतः कृत्वा मुक्ताजाल-परिक्षिप्तं वैडूर्यमणिशोभितं, शातकुम्भमयं दिव्यं प्रेक्षागारम् उपागमत्।

जयतांवर ! महाभागा गान्धारी, कुन्ती सपरिच्छदाः सप्रेष्याः ताः सर्वाः स्त्रियः हर्षात् यथादेवस्त्रियः मञ्चान् आरुरुहुः। कुमाराणां कृतास्त्रतां दर्शनेप्सु ब्राह्मण क्षत्रियाद्यं चातुर्वर्ण्यं पुराद् द्रुतं समभ्यगात्। प्रवादितैः वादित्रैः जनकौतुहलेन च महार्णव इव क्षुब्धः स समाजः दर्शनेप्सुः क्षणेन एकस्थतां जगाम ह।

ततः तदा शुक्लाम्बरधरः, शुक्लयज्ञोपवीतवान्, शुक्लकेशः, सितश्मश्रुः शुक्लमाल्यानुलेपनः, सपुत्र आचार्यः साङ्गारकः अंशुमान् जलधरैः हीनं नभ इव रङ्गमध्यं ह प्रविवेश। स बलवतांवरः सुमन्त्रज्ञान् ब्राह्मणान् मंगलं कारयामास-यथासमयं च बलिं चक्रे। पुण्यस्य सुखपुण्याह-घोषस्य समनन्तरं नराः विविधं शस्त्रोपकरणं गृहीत्वा* विविशुः। ततस्ततः बद्धतूणाः

* गृह्य इत्यार्षः प्रयोगः। १३४।२६

बद्धांगुलित्राणाः बद्धकक्षाः सधनुषो भरतर्षभाः महारथाः विविशुः । ते युधिष्ठिरपुरोगमाः महावीर्याः कुमाराः अनुज्येष्ठं तत्र परमाद्भुतं अस्त्रं चक्रुः । केचिद् मनुजाः शराक्षेपभयात् शिरांसि अवनामयां*१ चक्रिरे ।

अपरे सुविस्मिताः धृष्टम् ईक्षां चक्रिरे*२। ते स्म-वाजिभिः द्रुतं ऊह्यमानाः नामाङ्कशोभितैः लाघवोत्सृष्टैः बाणैः लक्ष्याणि बिभिदुः । तत्र ते गृहीत-शरकार्मुकं कुमारबलं गन्धर्वनगराकारं प्रेक्ष्य विस्मिताः अभवन्*३ भारत ! अन्ये शतसहस्रशः नराः विस्मयोत्फुल्लनयनाः सहसा साधु साधु इति चुक्रुशुः । ते महाबलाः रथचर्यासु, गजपृष्ठे अश्वपृष्ठे च धनुषि, नियुद्धे चासकृत् मार्गान् कृत्वा ततः गृहीत-खड्गचर्माणः प्रहारिणः भूयः सर्वासु भूमिषु यथोद्दिष्टान् त्सरुमार्गान् चेरुः । तत्र सर्वेषां खड्गचर्मणोः प्रयोगं लाघवं सौष्ठवं शोभां स्थिरत्वं दृढमुष्टि-तां ददृशुः ।

अथ तौ एक-शृङ्गौ अचलौ इव नित्य संहृष्टौ महाबाहू सुयोधन-वृकोदरौ गदाहस्तौ बद्धकक्षौ, पौरुषे पर्यवस्थितौ वासिताहेतोः समदौ बृहन्तौ कुञ्जरौ इव

---

*१ अवनमामिरे' इत्यार्षः प्रयोगः । १३६।३५
*२ 'ईक्षां चक्रे' इत्यार्षः प्रयोगः । १३६।३५
*३ विस्मिताभवन् इत्यार्षः प्रयोगः । १३७।३७

अवतीर्णौ। तौ महाबलौ समदौ कुञ्जरौ इव निर्मलगदौ प्रदक्षिणसव्यानि मण्डलानि चेरतुः। कुमाराणां तत् सर्वं विचेष्टितं विदुरः धृतराष्ट्राय पाण्डवारणिः गान्धार्यै* न्यवेदयताम्

वैशम्पायन उवाच—"कुरुराजे बलीनां वरे भीमे च रङ्गस्थे जनः पक्षपातकृतस्नेहः द्विधा इवाभवत्। ही वीर कुरुराज! इति, ही भीम! इति जल्पतां पुरुषाणां सुविपुलाः प्रणादाः सहसोत्थिताः। ततो बुद्धिमान् भारद्वाजः क्षुब्धार्णवनिभं रङ्गम् आलोक्य प्रियं पुत्रम् अश्वत्थात्मानम् अब्रवीत्—"एतौ महावीर्यौ वारय उभौ अपि कृतयोग्यौ भीमदुर्योधनोद्भवः रङ्ग-प्रकोपो अयं मा भूत्।"

वैशम्पायन उवाच—"ततः गुरुपुत्रेण युगान्तानिल-संक्षुब्धौ महाबलौ अर्णवौ इव तौ उद्यद्गदौ वारितौ। ततः रणाङ्गणतः द्रोणः महामेघ-निभ-स्वनं वादित्रगणं निवार्य वचनम् अब्रवीत्—"यो मे पुत्रात् प्रियतरः ऐन्द्रिः पार्थः सर्व शास्त्रविशारदः इन्द्रानुजसमः सः दृश्यताम्।"इति

अथ आचार्यवचनेन कृतस्वस्त्ययनो युवा बद्धगोधाङ्गुलित्राणः, पूर्णतूणः सकार्मुकः फाल्गुनः काञ्चनं कवचं बिभ्रत् सार्कः सेन्द्रयायुधतडित्, ससन्ध्यः तोयदः

* 'गान्धार्याः' इत्यार्षः प्रयोगः। १३६।३५

इव प्रत्यदृश्यत। ततः सर्वस्य रङ्गस्य समुत्-पिञ्जलकः अभवत्। समन्ततः सशङ्खानि वाद्यानि प्रावाद्यन्त। एषः श्रीमान् कुन्तीसुतः, एषः मध्यम-पाण्डवः, एषः महेन्द्रस्य पुत्रः, एषः कुरूणां रक्षिता अस्त्रविदुषां श्रेष्ठः एषः धर्मभृतांवरः एषः च शीलवतामपि परः शील ज्ञान-निधिः इत्येवं प्रेक्षकेरिताः तुमुला वाचा शुश्रुवुः। कुन्त्या उरः प्रस्रव-संयुक्तैः अस्रैः उरः क्लिन्नम अभवत्।

अथ तेन महता शब्देन पूर्णश्रुतिः नरश्रेष्ठः धृतराष्ट्रः हृष्टमानसः विदुरम् अब्रवीत्—"क्षत्तः! क्षुब्धार्णवनिभः किमेषः सुमहास्वनः (यः) रङ्गे नभस्थलं भिन्दन् इव सहसा एव उत्थितः।

विदुरः उवाच—"एषः पाण्डुनन्दनः फाल्गुनः पार्थः स कवचः अवतीर्णः तत्र एषः सुमहास्वनः।"

धृतराष्ट्र उवाच—महामते! "धन्योऽस्मि; अनुगृहितोऽस्मि! रक्षितोऽस्मि! पृथारणि-समुद्भूतैः त्रिभिः पाण्डव-वह्निभिः।"

वैशम्पायन उवाच—तस्मिन् प्रमुदिते रङ्गे कथञ्चित् प्रत्युपस्थिते विभत्सुः आचार्याय अस्त्रलाघवं दर्शयामास।

"आग्नेयेनासृजद् वह्निं वारुणेनासृजत्पयः।
वा-यव्येनासृजद् वायुं पार्जण्येनासृजद् घनान्॥
भौमेन प्राविशद् भूमिं पार्वतेनासृजद् गिरीन्।
अन्तर्धानेन चास्त्रेण पुनरन्तर्हितो ऽभवत्॥

क्षणात् प्रांशुः क्षणाद् ह्रस्वः क्षणाच्च रथधूर्गतः ।
क्षणेन रथमध्यस्थः क्षणेनावातरत्*१महीम् ॥
अ० प० १२७।१८-२१

स सौष्ठवेन अभिसंक्षिप्तः स गुरुप्रियः गुरून् चापि सूक्ष्मं सुकुमारञ्च अपि विविधैः शरैः अविध्यत् ।

भ्रमतः च लोहस्य वराहस्य प्रमुखे असंसक्तान् पञ्च बाणान् एकबाणवत् संमुमोच । महावीर्यःचले रज्ज्वावलम्बिनि गव्ये विषाणकोशे एकविंशतिं सायकान् निचखान । अनघ इत्येवमादि च सुमहत् खड्गे धनुषि, गदायाश्च शस्त्रकुशलो मण्डलानि प्रादर्शयत्*२ ।

भारत ! तस्मिन् कर्मणि समाप्त-भूयिष्ठे वादित्रस्य च निःस्वने समाजे च मन्दीभूते द्वारदेशात् महात्म्यबल-सूचकः वज्रनिषपेष सदृशः-समुद्भूतः भुजनिस्वनः शुश्रुवे ।

वसुधाधिप ! क्षणेन रङ्गस्य एवं मतिरभूत्—

"दीर्यन्ते किन्नु गिरयः किंस्विद् भूमिर्विदीर्यते ।
किंस्विदापूर्यते व्योम जलधाराघनैर्घनैः ॥

तदा सर्वे प्रेक्षकाः द्वाराभिमुखाः बभूवुः ।

द्रोणः पञ्चभिः भ्रातृभिः परिवृतः सावित्रेण पञ्चतारेण संयुक्तः चन्द्रमा इव बभौ ।

---

*१'अवतरत्' इत्यार्षः प्रयोगः । १३७।२१
*२'प्रदर्शयम्' इत्यार्षः प्रयोगः । १३७।२५

अश्वत्थात्मना सहितं ऊर्जितं भ्रातृणां शतं उत्थितं अमित्रघ्नं दुर्योधनम् पर्यवारयत् ।

तदा उद्यतायुधैः समवस्थितैः तैः भ्रातृभिः गदाग्रपाणिः सः तथा बभौ यथा पुरा दानवसंक्षये देवगणैः समावृतः पुरन्दरः ।

विस्मयोत्फुल्ल-लोचनैः पुरुषैः अवकाशे दत्ते पर-पुरञ्जयः कर्णः विस्तीर्णं रंगं विवेश । सहजं कवचं बिभ्रत्, कुण्डलोद्योतितानन:, सधनुः, बद्ध-निस्त्रिंशः, पादचारी पर्वतः इव, सिंहर्षभः गजेन्द्राणां, बल-वीर्य-पराक्रमः, दीप्ति-कान्ति-द्युति गुणैः सूर्येन्दु-ज्वलनोपमः, प्रांशुः कनक-तालाभः सिंह-संहननो युवा, असंख्येय-गुणः श्रीमान्, भास्करस्य आत्म-संभवः । स महाबाहुः सर्वतो रङ्ग-मण्डलं निरीक्ष्य द्रोणकृपयोः न अत्यादृतमिव प्रणामम् अकरोत् । स सर्वः समाजजनः निश्चलः स्थिर-लोचनः, कोऽयमिति आगतक्षोभः कौतूहल-परो अभवत् ।

स भ्राता, सावित्रः, वदतां वरः मेघ-गम्भीर-स्वरेण अज्ञातं भ्रातरं पाकशासिनम् अब्रवीत्—"पार्थ ! यत् ते कर्म कृतम्, अहं ततो विशेषवत् नृणां पश्यतां करिष्ये । मा आत्मानं विस्मयं गमः ।"

वदतां वर ! ततस्तस्य वचने असमाप्ते, सर्वतः जनः यन्त्र-क्षिप्त इव क्षिप्रम् उत्तस्थौ । मनुजव्याघ्र-

क्षणेन दुर्योधनं प्रीतिः च उपाविक्षत् । बीभत्सुं ह्रीः च क्रोधः च अन्वाविवेश ह ।

ततो द्रोणाभ्यनुज्ञातः महाबलः सदा प्रियरणः कर्णः पार्थेन यत्कृतं तच्चकार ।

भारत ! अथ तत्र भ्रातृभिः सह दुर्योधनः कर्णं परिष्वज्य मुदा ततो वचनम् अब्रवीत्—"महाबाहो ! स्वागतं ते । मानद ! दिष्ट्या प्राप्तोऽसि । अहं च कुरु-राज्यं च यथेष्टम् उपभुज्यताम् ।

कर्ण उवाच—"अहं मन्ये, सर्वं कृतम् । त्वया च सखित्वं वृणे । प्रभो ! पार्थेन द्वन्द्व-युद्धं कर्तुमिच्छामि ।

दुर्योधन उवाच—"मया सार्धं भोगान् भुङ्क्ष्व । बन्धूनां प्रियकृद् भव । अरिंदम ! सर्वेषां दुर्हृदां मूर्धनि पादं कुरु" ।

वैशम्पायन उवाच—"ततः पार्थः आत्मानं क्षिप्तमिव मत्वा भ्रातृ-समूहस्य मध्ये स्थितम् अचलम् इव कर्णम् अभ्यभाषत—

अनाहूतोपसृष्टानाम्, अनाहूतोपजल्पिनाम् ।
ये लोकास्तान् हतः कर्ण ! मया त्वं प्रतिपत्स्यसे ॥
आ० प० १३८। १८

कर्ण उवाच—
रङ्गोऽयं सर्व-सामान्यः, किमत्र तव फाल्गुन ।
वीर्य-श्रेष्ठाश्च राजानो, बलं धर्मोऽनुवर्त्तते ॥ ॥

भारत ! दुर्बलायासैः, क्षेपैः किम् । शरैः कथय । यावत् ते शिरः शरैः गुरोः समक्षम् अपहरामि ।"

वैशम्पायन उवाच—"ततो द्रोणाभ्यनुज्ञातः परपुरञ्जयः पार्थः भ्रातृभिः त्वरया आश्लिष्टः रणाय तम् उपजगाम ।

ततो दुर्योधनेनापि सभ्रात्रा, सशरं धनुः प्रगृह्य स्थितः समरोद्यतः कर्णः परिष्वक्तः ।

धार्तराष्ट्राः यतः कर्णः, तस्मिन् देशे व्यवस्थितः ।
भारद्वाजः कृपो भीष्मो यतः पार्थः ततो अभवन् ।
रङ्गः द्विधाः समभवत् । स्त्रीणां द्वैधम् अजायत ।

विज्ञातार्था कुन्ती-भोज-सुता मोहं जगाम । सर्व-धर्मवित् विदुरः तां तथा मोहापन्नां कुन्तीम् प्रेष्याभिः चन्दनोदकैः आश्वासयामास । ततः प्रत्यागतप्राणा तौ उभौ पुत्रौ परिदंशितौ दृष्ट्वा सु-संभ्रान्ता किञ्चन नावपद्यत ।

द्वन्द्व-युद्ध-समाचारे कुशलः सर्व-धर्मवित् शारद्वतः कृपः तौ उद्यत-महाचापौ अब्रवीत्—"अयं पृथायाः तनयः कनीयान् पाण्डु-नन्दनः कौरवो भवता सार्धं द्वन्द्व-युद्धं करिष्यति । महाबाहो ! त्वम् अपि एवं मातरं, पितरं, कुलं कथयस्व, येषां नरेन्द्राणां त्वं कुल-भूषणः । ततः पार्थः त्वां विदित्वा प्रतियोत्स्यति वा न वा । नृपात्मजाः

वृथा-कुल-समाचारैः न युध्यन्ते ।"

वैशम्पायन उवाच—"एवम् उक्तस्य कर्णस्य व्रीडावनतम् आननम् (तथा) बभौ यथा वर्षाम्बु-विक्लिन्नम् आगलितं पद्मं ।

दुर्योधन उवाच—"आचार्य ! राज्ञां शास्त्र-विनिश्चये त्रिविधा योनी । सत्कुलीनः, शूरः, यः च सेनां प्रकर्षति । यदि अयं फाल्गुनः युद्धे अराज्ञा योद्धुं न इच्छति, तस्माद् अयं अङ्ग-विषये राज्ये मया अभिषिच्यते ।

वैशम्पायन उवाच—"ततः तस्मिन् क्षणे मन्त्रविद्भिः काञ्चने पीठे, सलाज-कुसुमैः काञ्चनैः घटैः महारथः कर्णः अभिषिक्तः । स-छत्र-बालव्यजनः, जय शब्दोत्तरेण अङ्ग-राज्यस्य श्रिया युक्तः महाबलः सवृषो राजा तदा कौरवं वचनम् उवाच—"अस्य राज्य-प्रदानस्य सदृशं ते किं ददामि । राज शार्दूल, नृप ! प्रब्रूहि ! तथा हि कर्त्ता अस्मि ।"

तं स सुयोधनः आह—"अत्यन्तं सख्यम् इच्छामि" इति ।

ततः एवमुक्तः कर्णः तम् प्रत्युवाच—"तथा" इति । हर्षात् च उभौ समाश्लिष्य परां मुदम् अवापतुः ।

वैशम्पायन उवाच—"ततः स्रस्तोत्तर पटः, सप्रस्वेदः, सवेपथुः, यष्टि-प्राणो, अधिरथो ह्वयन्निव रंगं विवेश। कर्णः तम् आलोक्य पितृगौरव-यन्त्रितः धनुः त्यक्त्वा अभिषेकार्द्रशिराः शिरसा समवन्दत। ततः रथ-सारथिः ससंभ्रमः पटान्तेन पादावच्छाद्य पुत्रेति परिपूर्णार्थम् अब्रवीत्। परिष्वज्य च अथ स्नेह-विक्लवः अङ्गराज्याभिषेकार्द्रं तस्य मूर्धानम् अश्रुभिः पुनः सिषिचे।

तदा तं दृष्ट्वा 'सूतपुत्रोऽयम्' इति सञ्चिन्त्य पाण्डवो भीमसेनः प्रहसन् इद वाक्यम् अब्रवीत्—"सूतपुत्र! त्वं रणे पार्थेन वधं न अर्हसि। त्वया कुलस्य सदृशः प्रतोदः तूर्णं गृह्यताम्। नराधम! अध्वरे हुताशसमीपस्थं पुरोडाशम् श्व इव त्वम् अङ्गराज्यम् उपभोक्तुं नार्हः।

एवमुक्तः कर्णः ततः किञ्चित्-प्रस्फुरिताधरः विनिःश्वस्य गगनस्थं दिवाकरम् उदैक्षत।

ततो महाबलः दुर्योधनः कोपात् तस्मात् भ्रातृ-पद्मवनात् मदोत्कटः द्विप इव उत्पपात। भीमकर्माणम् अवस्थितं भीमसेनम् स अब्रवीत्-"वृकोदर! ईदृशं वचनं वक्तुं ते न युक्तम्।

क्षत्रियाणां बलं ज्येष्ठं योद्धव्यं क्षत्र-बन्धुना ।
शूराणां च नदीनां च दुर्विदाः प्रभवाः किल ॥
आ० प० अ० १३६ । ११

वह्निः सलिलाद् उत्थितः, येन चराचरं व्याप्तम्। दधीचस्य अस्थितो वज्रं (येन) दानव सूदनं कृतम्।

क्षत्रियेभ्यश्च ये जाताः ब्राह्मणास्ते च ते श्रुताः ।
विश्वामित्र-प्रभृतयः प्राप्ताः ब्रह्मत्वमव्ययम् ॥

भवतां च यथा जन्म तदपि मया आगमितम् । सकुण्डलं सकवचं, सर्वलक्षण-लक्षितम् आदित्य-सदृशं व्याघ्रं मृगी जनिष्यति ! अयं नरेश्वरः मया अनेन बाहुवीर्येण आज्ञानुवर्तिना । पृथिवी–राज्यम् अर्हः, न अङ्गराज्यम् । यस्य वा मनुजस्य इदं मद्विचेष्टितम् न क्षान्तं, स रथम् आरुह्य पद्भ्यां कार्मुकं विनामयतु" ।

ततः सर्वस्य रङ्गस्य महान् हाहाकारो अभूत् । साधुवादानुसम्बद्धः च सूर्यः अस्तमुपागमत् ।

ततः नृपो दुर्योधनः अग्रकरे कर्णमालम्ब्य दीपिकाग्निकृतालोकः तस्मात् रङ्गात् विनिर्ययौ । विशाम्पते ! सह-द्रोणाः, सकृपाः, भीष्मेण सहिताः सर्वे स्वं स्वं निवेशनं ययुः ।

भारत ! तदा कश्चित् जनः अर्जुनेति, कश्चित्

कर्णोति, कश्चित् दुर्योधन इत्येवं ब्रुवन्तः प्रस्थिताः।

पार्थव ! दुर्योधनस्य अपि कर्णम् आसाद्य अर्जुन संजातं भयं क्षिप्रम् अन्तरधीयत। युधिष्ठिरस्य अपि तदा मतिः अभवत् क्षितौ कर्णतुल्यो धनुर्धरो नास्ति।

इति श्री महाभारते शतसाहस्र्यां संहितायाम् अस्त्र प्रदर्शनम्

---

# द्रुपद-शासनम्

(गुरु-दक्षिणा)

वैशम्पायन उवाच—स वै गुरुः पाण्डवान् धार्तराष्ट्रान् च कृतास्त्रान् प्रसमीक्ष्य गुर्वर्थं दक्षिणा-कालः*१ प्राप्तः*१ अमन्यत।

महीपते! आचार्यः द्रोणः सर्वान् शिष्यान् समानीय अशेषेण दक्षिणार्थम् अर्थम् अवोचत्*२।

"पाञ्चाल-राजं द्रुपदं गृहीत्वा रणमूर्धनि।
पर्यानयत भद्रं वः सा स्यात् परमदक्षिणा॥"

१४०।३

तथा ते सर्वे प्रहारिणः 'तथा' इति उक्त्वा आचार्य-धन-दानार्थं द्रोणेन सहिताः ययुः। ततः ते नरर्षभाः पाञ्चालान् निघ्नन्तः अभिजग्मुः। तस्य महौजसवः द्रुपदस्य नगरं ममृदुः।

ततो दुर्योधनः, कर्णः च महाबलः युयुत्सुः, दुःशासनः, विकर्णः च चलसन्धः, सुलोचनः, एते अन्ये च बहवः क्षत्रियर्षभाः बहुविक्रमाः, वररथारूढाः, कुमाराः अहं पूर्वम्, अहं पूर्वम् इति सादिभिः सह नगरं प्रविश्य राज-मार्गं उपाययुः।

* १ दक्षिणाकाले प्राप्ते इति आर्षः प्रयोगः १४०।१
* २ अवोचयत् इति आर्षः प्रयोगः १४०।२

राजन् तस्मिन् काले तु पाञ्चालाः कृतसन्नाहाः महीधरः, यज्ञसेनः महद् बलं दृष्ट्वा श्रुत्वा च भ्रातृभिः सहितः त्वरया गृहात् निर्ययौ ।

ते सर्वे एव शरवर्षाणि मुञ्चन्तः प्रणेदुः । ततः शुभ्रेण रथेन तु कौरवान् समासाद्य, युधि दुर्जयः यज्ञसेनः शरान् घोरान् ववर्ष ।

वैशम्पायन उवाच---"अथ कुमाराणां दर्पोद्रेकात् द्विजसत्तमम् आचार्यद्रोणं पूर्वम् एव तु सम्मन्त्र्य पार्थो अब्रवीत् । एषां पराक्रमस्य अन्ते वयं साहसं कुर्याम । रणमूर्धनि एतैः पाञ्चालः ग्रहीतुमशक्तः । स कौन्तेयः तु एवम् उक्त्वा भ्रातृभिः सहितः नगरात् बहिः एव अर्धक्रोशे अतिष्ठत् ।

द्रुपदः कौरवान् दृष्ट्वा समन्ततः महता शर-जालेन कौरवीं चमूं मोहयन् प्राधावतः * तत्र आहवे तम् उद्यतं रथेन आशु-कारिणम् एकम् अनेकम् इव सन्त्रासात् मेनिरे कौरवाः । द्रुपदस्य घोराः शराः सर्वतो दिशम् विचेरुः । महाराज ! ततः महात्मनां पाञ्चालानाम् निवेशने सिंहनादः, गगनं संस्पृश्य महान् धनुर्ज्या-तलशब्दः ससंज्ञे ।

दुर्योधनो विकर्णः च, सुबाहुः, दीर्घलोचनः, दुः-शासनः च संक्रुद्धः शरवर्षैः अवाकिरन् । भारत !

* प्राधावत् इत्यार्षः प्रयोगः १४०।१५

युधि दुर्जयः महेष्वासः सः पार्षतः अतिविद्धः तत् क्षणादेव तानि अनीकानि व्यधमत् । दुर्योधनं विकर्णं, महाबलं कर्णं च अपि नानानृपसुतान् वीरान् विविधानि सैन्यानि च अलात-चक्रवत् सर्वं चरन् बाणैर् अतर्पयत् । तदा ततस्तु सर्वे नागराः मुसलैः यष्टिभिः कौरव्यान् वर्ष-माणः घना इव अभ्यवर्षन्त । तदा सबालवृद्धाः पौराः सुतुमुलं युद्धं श्रुत्वा कौरवान् अभ्ययुः । (कौरवाः) क्रोशन्तः पाण्डवान् प्रति द्रवन्ति स्म नदन्ति स्म ।

आर्तीनां लोमहर्षणं स्वनं श्रुत्वा पाण्डवं युधिष्ठिरं मा युध्यस्व इति निवार्य, पाण्डवाः द्रोणम् अभिवाद्य तदा रथान् आरुरुहुः । तदा फाल्गुनः माद्रेयौ चक्ररक्षौ अकरोत् । सदा गदया सह भीमसेनः सेनाग्रगो अभूत् । तदा कौन्तेयः शत्रु-स्वनं श्रुत्वा भ्रातृभिः सहितः दिशः आनादायन् रथेन जवेन आयात् । ततः पाञ्चालानाम् उद्धतार्णव-निस्वनां सेनां महाबाहुः भीमसेनः अन्तक इव दण्ड-पाणिः महासेनां प्रविवेश, यथा सागरं मकरः । गदाधरो भीमो नागानीकं स्वयम् अभ्यद्रवत् । सः काल-रूपधृक् पार्थो युद्ध-कुशलः आत्मनः वीर्येण गदया कुञ्जरानीकम् अहनत् । ते द्विरदाः गजाः गिरिसंकाशाः

भीमसेनस्य गदया भिन्न-मस्तक-पिण्डकाः बहु-रुधिरं क्षरन्तः, वज्राघाताद् अचला इव भूमौ पतन्ति । अर्जुनाग्रजः पाण्डवो गजान्, अश्वान्, रथान्, पदातीन्, चैव न्यवधीत् । वृकोदरः रथनागान् चालयन् तथा संचचाल वने यथा गोपालः दण्डेन पशुगणान् ।

वैशम्पायन उवाच—"राजन् ! फाल्गुनः तदा भारद्वाज-प्रियं कर्तुमुद्यतः । स पाण्डवः पार्षतं शरजालेन क्षिपन् युगान्ताग्निः इव ज्वलन् हयौघान् रथौघान् गजौघान् च समन्ततः समरे पातयन् आगात् ततः ते पाञ्चालाः तथा सृञ्जयाः हन्यमानाः तूर्णं सर्वशः नानाविधैः शरैः पार्थं संछाद्य, मुखैः सिंहनादं कृत्वा पाण्डवं समयुध्यन्त । सुमहाद्भुतदर्शनं घोरं तद् युद्धम् अभवत् । पाकशासनिः सिंहनाद-स्वनं श्रुत्वा नामृष्यत् । ततः किरीटी सहसा महता इषुजालेन छादयन् समरे पाञ्चालान् मोहयन्निव अद्रवत् ।

यशस्विनः कौन्तेयस्य बाणान् शीघ्रम् अभ्यस्यतः अनिशं सन्दधानस्य च किञ्चित् अन्तरं न ददृशे । साधु-शब्देन मिश्रितः सिंहनादः संजज्ञे । ततः पाञ्चालराजः सत्यजिता सह तथा त्वरमाणोऽभिदुद्राव यथा शम्बरो महेन्द्रम् ।

महता शरवर्षेण पार्थः पाञ्चालमावृणोत् । ततः

पाञ्चालके बले हलाहला शब्दः आसीत्, महासिंहः गजानां यूथपमिव जिघृक्षति।

तदा सत्यजित् सत्य-विक्रमः पार्थमायान्तं दृष्ट्वा पाञ्चालं वै परिप्रेप्सुः धनञ्जयम् अदुद्रवत्।

ततस्तु अर्जुन-पाञ्चालौ युद्धाय समुपागतौ। इन्द्र-वैरोचनौ इव तौ सैन्यं व्यक्षोभयेतां। ततः पार्थः सत्य-जितं दशभिः मर्म-भेदिभिः बलवद् गाढं विव्याध। तद् अद्भुतमिव अभवत्। ततः पाञ्चालः शरशतैः पार्थं शीघ्रम् आर्दयत्। महारथः पार्थस्तु शरवर्षेण छाद्यमानः, महा-वेगो धनुर्ज्याम् अवमृज्य वेगं चक्रे। ततः सत्य-जितः चापं छित्त्वा राजानम् अभ्ययात्।

अथ सत्यजित् वेगवत्तरम् अन्यद् धनुः आदाय सत्वरः साश्वं ससूतं सरथं पार्थं विव्याध। पाञ्चालेन आर्दितो युधि सः पार्थः तं न ममृषे। ततः तस्य विनाशाय सत्वरं हयान् ध्वजं, धनुः, मुष्टिम्, उभौ तौ, पाणिसारथी शरैः * व्यसृजत्। स तथा कार्मुकेषु, विनियुक्तेषु हयेषु पुनः पुनः भिद्यमानेषु आहवे विमुखो अभवत्।

राजन! सः सत्यजितम् आहवे तथा विमुखमालोक्य महता वेगेन पाण्डवम् अभ्यवर्षत। तदा जयतां

*शरान् इति पाठः १४०।५१

वरः अर्जुनः महद् युद्धं चक्रे। पार्थः तस्य धनुः छित्त्वा, ध्वजं च उर्व्याम् अपातयत्। पञ्चभिः सायकैः तस्य हयान् सूतं च विव्याध। ततः तत् चापम् उत्सृज्य शरावरम् आददानं सहसा, अपतत् कौन्तेयः अथ खड्गमुद्धृत्य पाञ्चालस्य रथस्य एषाम् आप्लुत्य, सिंह-नादम् अकरोत्।

पाञ्चालरथम् अस्थाय धनञ्जयः अवित्रस्तः सः पार्थः धनञ्जयः अम्भोनिधिं विक्षोभ्य नागमिव तमग्रहीत्।

ततस्तु सर्वे पाञ्चालाः दशदिशः विद्रवन्ति (स्म)। सः धनञ्जयः सर्वं सैन्यम् * आत्मनः बाह्वोर्बलं दर्शयन् सिंहनादस्वनं कृत्वा निर्जगाम। तदा कुमाराः अर्जुनम् आयान्तं दृष्ट्वा सहिताः तस्य महात्मनः द्रुपदस्य नगरं ममृदुः।

अर्जुन उवाच—"राजसत्तमः द्रुपदः कुरु-वीराणां सम्बन्धी। भीम! तद्बलं मा वधीः, गुरुदानं प्रदीयताम्।

वैशम्पायन उवाच—"राजन्! तदा अर्जुनेन निवारितः महाबलः भीमसेनः युद्धधर्मेषु अतृप्तः न्यवर्त्तत। भरतर्षभ! ते रणमूर्द्धनि सहामात्यं यज्ञसेनं द्रुपदं गृहीत्वा द्रोणाय उपाजह्रुः, द्रोणः तं भग्नदर्पं हृतधनं तथा वशम् आगतं द्रुपदं स-वैरं मनसा ध्यात्वा अब्रवीत्—

* सर्वसैन्यानाम्, इत्यार्षः विभक्तिः प्रयोगः। १४०।५७

"मया ते राष्ट्रं तरसा विमृद्य ते पुरं मृदितं जीवं रिपुवशं प्राप्य सखिवशं किमिष्यते।

"एवमुक्त्वा प्रहस्यैवं किञ्चित् सः पुनः अब्रवीत्।
मा भैः प्राणभयात् वीर क्षमिणो ब्राह्मणा वयम्।

१४०।६६

बाल्ये त्वया मया सह आश्रमे यत्तु क्रीडितं, क्षत्रियर्षभ! तेन प्रीतिः स्नेहः च संवर्द्धितः।

जनाधिपः! पुनः एव त्वया सख्यं प्रार्थयेयम्
राजन्! ते वरं ददामि राजस्य अर्द्धमवाप्नुहि।
अराजा किल नो राज्ञः सखा भवितुमर्हति।
अतः प्रयतितं राज्ये यज्ञसेन मया तव॥

१४०।६७

भागीरथ्याः दक्षिणे कूले राजा असि अहम् उत्तरे।
पाञ्चाल! यदि मन्यसे माम् सखायं विजानिहि।

द्रुपद उवाच—"ब्रह्मन्! विक्रान्तेषु महात्मसु इदम् अनाश्चर्यम्। अहं त्वया प्रीये त्वत्तः च शाश्वतीं प्रीतिम् इच्छामि।"

वैशम्पायन उवाच—"भारत! स द्रोणः एवम् उक्तः तं मोक्षयामास प्रीतात्मा चैनं सत्कृत्य राज्यार्द्धं प्रत्यपादयत्। अथ स दीनमनाः गङ्गायास्तीरे जनपदायुतां

माकन्दीं पुरोत्तमं च काम्पिल्यं यावत् चर्मण्वती नदी च दक्षिणान् पाञ्चालान् अध्यावसत् ।

द्रोणः च हस्त्रिं विषयं समभ्यपद्यत * राजन्! एवं राजन्! एवं जनपदायुता अहिच्छत्रापुरी युधि पार्थेन निर्जित्य द्रोणाय प्रतिपादिता ।

इति श्री महाभारते शतसाहस्र्यां संहितायां द्रुपदशासनम् ॥

*समभिपद्यत, इत्यार्षः प्रयोगः १४०७६

# युधिष्ठिरस्य यौवराज्यम्

वैशम्पायन उवाच—"पार्थिव ! ततः संवत्सरस्यान्ते धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः यौवराज्याय स्थापितः । ततः अदीर्घेण कालेन कुन्तीपुत्रो युधिष्ठिरः धृति-स्थैर्य-सहिष्णुत्वात् आनृशंस्यात् आर्जवात्, तथैव भृत्यानाम् अनुकम्पार्थं स्थिर—सौहृदात्, तथा शीलवृत्तसमाधिभिः पितुः कीर्त्तिम् अन्तर्दधे ।

पाण्डवः वृकोदरः असियुद्धे, गदायुद्धे, रथयुद्धे च संकर्षणात् वै शश्वत् । शिक्षाम् अशिक्षत् । भीमस्तु समाप्तशिक्षः बले द्युमत्-सेनसमः पराक्रमेण सम्पन्नः भ्रातॄणां वशे अचरत् ।

फाल्गुनः प्रगाढ़मुष्टित्वे लाघवे तथा वेधने, ऋजु-वक्र-विशालानां क्षुर-नाराच-भल्लानां विटपानां च तत्त्ववित् प्रयोक्ता अभवत् ।

लाघवे सौष्ठवे च लोके विभत्सु-सदृशः अन्यः कश्चन् न विद्यते इति द्रोणः व्यवस्थितः । ततः द्रोणः कौरवसंसदि गुडाकेशम् अब्रवीत्—"भारत ! पुरा धनुर्वेदे अगस्तस्य शिष्यः अग्निवेशः इति ख्यातः मम गुरुः,तस्य शिष्यो अस्मि ।

"तपसा यन्मया प्राप्तममोघमशनि-प्रभम् ।
अस्त्रं ब्रह्मशिरोनाम यद्दहेत् पृथिवीमपि ॥"

१४१।१०

एतद् गमयितुम् अहं तीर्थात् तीर्थं समुद्यतः। गुरुणा दद्दता चोक्तम्—"भारद्वाज ! त्वया इदमल्पवीर्येषु मनुष्येषु न विमोक्तव्यम्।" वीर! त्वया इदं प्राप्तं अन्यस्तु इदं दीव्यं नार्हति। विशाम्पते ! त्वया मुनिसृष्टः समयस्तु रक्षयः जातिग्रामस्य पश्यतः आचार्यदक्षिणां देहि।

फाल्गुनेन ददानि इति प्रतिज्ञाते गुरुः अब्रवीत्—"अनघ ! युद्धे ऽहं युध्यमानः त्वया प्रतियोधव्यः।"

सः कुरुपुङ्गवः द्रोणाय तथेति प्रतिज्ञाय चरणौ उपसंहृ्य उत्तरां दिशं प्रायात्। सागरमेखलां महीं स्वभावात् शब्दः अगमत्। अर्जुनस्य समो लोके नास्ति कश्चन धनुर्धरः।

अथ पाण्डवः धनञ्जयः गदायुद्धे असियुद्धे, च रथयुद्धे च पारगो बभूव।

तदा नीतिमान् सहदेवो अपि विबुधाधिपतेः नीतिमवाप्य भ्रातॄणां वशे वर्त्तते। भ्रातॄणां प्रियः नकुलः द्रोणेनैव विनीतः अतिरथोदितः चित्रयोधी समाख्यातो बभूव। गन्धर्वाणाम् उपप्लवे त्रिवर्षकृतयुद्धः सौवीरस्तु अर्जुन-प्रमुखैः पार्थैः समरे हतः।

यं वीर्यवान् पाण्डुरपि वशे कर्त्तुं न शशाक, स यवनाधिपः राजा वशं नीतः आसीत्।

अथ विपुलो नाम सौवीरः अतीवबलसम्पन्नः कुरून् प्रति

  

सदा मानी धीमता पार्थेन शस्तः । सुमित्रं नाम सौवीरं संग्रामे कृतनिश्चयं दत्तामित्र इति ख्यातम् अर्जुनः शरैः अदमयत् । सः अर्जुनः भीमसेन–सहायः समरे सर्वान् प्राच्यान् रथानाम् अयुतम् च एकरथे ऽजयत् अथ तथैव धनञ्जयः एकरथो दक्षिणां दिशं गत्वा अजयत् धनौघं च कुरुराष्ट्रं प्रापयामास ।

एवं मनुजोत्तमाः महात्मानाः सर्वे पाण्डवाः पुरा परराष्ट्राणि निर्जित्य स्वराष्ट्रं ववृधुः ।

इति श्री महाभारते शतसाहस्र्यां संहितायां युधिष्ठिरस्य यौवराज्यम्

# कणिक-मन्त्रणा

वैशम्पायन उवाच—ततः धृढधन्विनां बलम् अतिख्यातं विज्ञाय धृतराष्ट्रस्य भावः पाण्डुषु सहसा दूषितः। स राजा चिन्ता-परमो निशिनिद्रां नालभत। महीपालः धृतराष्ट्रः पाण्डु-सुतान् वीरान्, बलोद्रिक्तान्, महौजसः श्रुत्वा आतुरः चिन्ताम् अगमत्। ततः मन्त्रिणां श्रेष्ठं, राजशास्त्रार्थवित्तमं मन्त्रिणं कणिकम् आहूय, वचः अब्रवीत्।

धृतराष्ट्र उवाच—"द्विजोत्तम ! पाण्डवाः नित्यम् उत्सिक्ताः, तेभ्यः असूये। कणिक ! तत्र मे निश्चिततमं सन्धिविग्रहकारणं त्वं समाचक्ष्व। तव वचनं करिष्ये।

वैशम्पायन उवाच—"तेन पृष्टः प्रसन्नमनाः राजशास्त्रार्थ-दर्शनः द्विजोत्तमः तीक्ष्णं वचनम् उवाच।

कणिक उवाच—"राजन्, अनघ ! तत्र मया प्रोच्यमानं शृणु। कुरुसत्तम ! एतत् श्रुत्वा मे ऽभ्यसूया न कर्तव्या।

नित्यम् उद्यत- दण्डः नित्यं विवृत- पौरुषः स्यात्। अच्छिद्रः परेषां विवरानुगः छिद्र दर्शी स्यात्। नित्यम् उद्यत-दण्डात् हि जनः भृशम् उद्विजते। तस्मात् दण्डेन एव सर्वाणि कार्याणि विधारयेत् परः अस्य छिद्रं न पश्येत्

परं छिद्रेण अन्वियात् कूर्म इव अङ्गानि गूहेत्। आत्मनः विवरं रक्षेत्। न कदाचन उपक्रम्य असम्यक् कृतकारी स्यात्। कण्टको हि अपि दुश्छिन्नः चिरम् आस्रावं जनयेत् अपकारिणां शत्रूणां वधमेव प्रशंसन्ति। सुनिर्दीर्णं, सुविक्रान्तं, सु-युद्धं, सुपलायितम्, आपदि आपदि काले च (अप) कुर्वीत न विचारयेत्। तात! दुर्बलो ऽपि रिपुः कथञ्चन न अवज्ञेयः, अल्पोऽपि अग्निः आश्रय-संश्रय तु कृत्स्नं वनं दहति। अन्धवे लायाम् अन्धः स्यात् बाधिर्यम् अपि च आश्रयेत्। तृणमयं चापं कुर्यात्। मृग-शायिकां शयीत। वशे स्थितं शत्रुम्- अपि सान्वादिभिः उपायैस्तु हन्यात् शरणागत इति उत् तस्मिन् दया न कर्तव्या। निरुद्विग्नो हि भवति. हतात् भयं न जायते। पूर्वापकारिणं तथा अमित्रं दानेन हन्यात्। पर-पक्षस्य त्रीन् पञ्च सप्त इति सर्वशः हन्यात्। पर पक्षस्य नित्यशः मूलम् एव आदितः छिन्द्यात्, ततः तदनन्तरम् तत्पक्षान् सर्वान् सहायान्, अधिष्ठाने छिन्न-मूले हि सर्वे तज्जीविनः हताः। छिन्नमूले वनस्पतौ कथं नु शाखाः तिष्ठेयुः*

अविवृतः एकाग्रः नित्यं विवर-दर्शकः स्यात्। राजन्। सपत्नेषु नित्यं नित्योद्विग्नः समाचरेत्। अग्न्याधानेन, यज्ञेन, काषायेण, जटाजिनैः लोकान् विश्वासयित्वा एव ततः यथा वृकः लुम्पेत्। अर्थानाम् उपधारणे शौचः अङ्कुशम् इत्याहुः।

---

* तिष्ठेरन् इत्यार्षः प्रयोगः १४२। १८।

फलितां शाखाम् आनाम्य पक्वं पक्वं प्रशातयेत्। लोके विपश्चितां पुंसाम् फलार्थः अयं समारम्भः। यावत् कालस्य पर्ययः (तावत्) अमित्रं स्कन्धेन वहेत्। ततः काले प्रत्यागते अश्मनि घटम् इव भिन्द्यात्। बहु कृपणं ब्रुवन् अपि अमित्रः न विमोक्तव्यः, तस्मिन् कृपा न कर्त्तव्या, अपकारिणं हन्यात् एव। अमित्रं सान्त्वेन तथा दानेन वा हन्यात्, तथैव भेद-दण्डाभ्यां सर्वोपायैः प्रशातयेत्।

पुत्रः, सखा वा, भ्राता वा, पिता वा, यदि वा गुरुः, रिपुस्थानेषु वर्तमानाः * भूतिम् इच्छता हन्तव्याः। अरिम् शपथेन, अर्थदानेन, विषेण, मायया वा अपि पुनः हन्यात्, नोपेक्षेत कथंचन।

कार्याकार्यम् अजानतः, अवलिप्तस्य उत्पथ-प्रतिपन्नस्य गुरोः अपि शासनं न्याय्यं भवति।

क्रुद्धः अपि अक्रुद्धरूपः स्यात् कदाचित् कोप-संयुक्तः अपि अन्यं न आपध्वंसेत् स्मितपूर्वाभिभाषिता (भवेत्) भारत! प्रहरिष्यन् प्रहरन् अपि प्रियं ब्रूयात्। प्रहृत्य च कृपायीत, शोचेत्, च रुदेत्*च। परं सान्त्व-दानार्थ-

* वर्तन्तः इत्यार्षः प्रयोगः। १४२।५२

वृत्तिभिः आश्वासयेत् च अपि, अथ अस्य पथि विचलिते काले प्रहरेत् ।

अपि चोरापराधस्य धर्मम् आश्रित्य तिष्ठतः ।
स हि प्रच्छाद्यते दोषः शैलो मेघैरवासितः ॥
१४२।५६

यः अनुप्राप्त-वधः स्यात् तस्यागारं प्रदीपयेत् ।
'अधमान्, नास्तिकान्, चौरान् विषये स्वे न वासयेत् ॥"

प्रत्युत्थान-सनाद्येन, केनचित् सम्पदानेन प्रति-विश्रब्ध-घाती, तीक्ष्ण-दंष्ट्रः, निमग्नकः स्यात् । अशङ्कितेभ्य अशङ्कितेभ्यः च सर्वशः शङ्केत । अशङ्क्याद् अपि उत्पन्नं भयं मूलं निकृन्तति ।

न विश्वसेदविश्वस्ते, विश्वस्ते, नाति विश्वसेत् ।
विश्वसान् भयम् उत्पन्नं मूलान्यपि निकृन्तति ॥
१४०।६६

आत्मन परस्य वा चारः सुविहितः कार्यः । पर-राष्ट्रेषु पाषाण्डान् तापसादीन् च योजयेत्, उद्यानेषु, विहारेषुदेवतायतनेषु पानागारेषु, रथ्यासु, अथ सर्व तीर्थेषु च अपि, चत्वरेषु, कूपेषु च, पर्वतेषु वनेषु च, समवायेषु सर्वेषु, सरित्सु च विचारयेत ।

---

* रुदेत इति आर्षः प्रयोगः । १४२।५७

'वाचा भृशं विनीतः स्यात् हृदयेन तथा क्षुरः ।
स्मित-पूर्वाभिभाषी स्यात् स्पृष्टो रौद्रेण कर्मणा ॥
१४०।६७

भूतिमिच्छता अञ्जलिः, शपथः सान्त्वं, शिरसा पाद-वन्दनम्, आशाकरणम् इत्येवं कर्तव्यम् ।

'सुपुष्पितः स्यादफलः, फलवान् स्याद्दुरारुहः ।
आमः स्यात् पक्व-संकाशः न च जीर्येत कर्हिचित् ॥
१४०।६९

त्रिवर्गे त्रिविधाः पीडाः, तथैव अनुबन्धाः हि । अनुबन्धाः शुभाः ज्ञेयाः, पीडाः तु परिवर्जयेत् । धर्मं विचरतः, अर्थ-लुब्धस्य, अति प्रवर्तिनः, कामस्य अपि सा पीडा द्वाभ्याम् अर्थं नियच्छति । अगर्वितात्मा, युक्तः, सान्त्व-युक्तः, अनसूयिता, अवेक्षितार्थः, शुद्धात्मा द्विजैः सह मन्त्रयीत । येन केन एव मृदुना दारुणा च कर्मणा हीनम् आत्मानम् उद्धरेत्, समर्थः धर्मम् आचरेत् ।

'न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥७४॥

यस्य बुद्धिः परिभवेत्तम् अतीतेन, अनागतेन दुर्बुद्धिं, अत्युत्पन्नेन पण्डितं सान्त्वयेत् ।

'यो ऽरिणा सह संधाय, शयीत कृतकृत्यवत् ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥७६॥

सदा अनसूयया मन्त्र-संवरणे यत्नः कार्यः। चारेण अनुपालितः अपि आकारम् अभिरक्षेत्*।

'नाछित्वा पर-मर्माणि, नाकृत्वा कर्मदारुणम्।
नाहत्वा मत्स्यघातीव, प्राप्नोति महतीं श्रियम्॥

अरेः, कर्शितं, व्याधितं, क्लीवम्, अपानीयकम् अघासकं, परिविश्वस्त-मन्दं च बलं प्रहर्तव्यम्। अर्थिक अर्थिनं न अभ्येति। न कृतार्थे संगतम् अस्ति। तस्मात् सर्वाणि साध्यानि सावशेषाणि कारयेत्। संग्रहे विग्रहे च अनसूयता यत्नः कार्यः। भूतिमिच्छता यत्नेन उत्साहश्च अपि कर्तव्यः। मित्राणि तथा रिपवः अस्य कृत्यानि न बुध्येरन्। आरब्धानि एव सुपर्यवसितानि अपि पश्येयुः*१।

भीतवत् संविधातव्यं यावद्भयमनागतम्।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यम् अभीतवत्॥
१४०।८३

यो नरः दण्डेन उपनतं शत्रुम् अनुगृह्णाति सः मृत्युमुपगृह्णीयात् यथा अश्वतरी गर्भं यत् च कार्यं पुरः स्थितम्, अनागतं हि बुध्येत, न तु बुद्धिक्षयात् किञ्चित् प्रयोजनम् अतिक्रामेत्।

तौ देशकालौ नैः श्रयसौ ज्ञेयौ इति स्थितिः। देशकालौ

---

*अभिरक्षेत इति आर्षः प्रयोगः १४०।७७
*१ पश्येरन् इत्यार्षः प्रयोगः १४०।८२

विभज्य, दैवं, धर्मादयः त्रयः (व्यवहर्तव्याः)। उपेक्षितः शत्रुः बालः अपि मूलं तालवत्कुरुते गहने उत्सृष्टः अग्निर् इव क्षिप्रं महान् संजायते। यो नरः स्तोकम् अग्निमिव आत्मानं संधुक्षयति स वर्धमानः महान्तम् अपि संचयं ग्रसते।

आशां कालवतीं दद्यात्, कालं विघ्नेन योजयेत्।
विघ्नं निमित्ततो ब्रूयात्, निमित्तं वापि हेतुतः॥

प्रतिच्छन्नः लोमहारी परिकर्तनः क्षुरः भूत्वा निशितः काल-साधनः द्विषतां प्राणान् हरेत्।

कुरुद्वह! पाण्डवेषु अन्येषु च यथान्यायं वर्त्तमानः (यथा) त्वं न मज्जेः, तथा कृत्यं समाचर। नराधिप! सर्व-कल्याण-सम्पन्नः विशिष्ट (च) इति निश्चयः, तस्मात् त्वं पाण्डुपुत्रेभ्यः आत्मानं रक्ष। नराधिप! यस्मात् भ्रातृव्यः पाण्डु-पुत्राः बलिनः, तस्माद् अरिंदम! यत् कर्तव्यम् (तत्) विस्पष्टं ब्रवीमि। राजन्! सपुत्रः तत् शृणु। श्रुत्वा च यत्नवान् भव। नराधिप! यथा पाण्डुभ्यो भयं न (भवेत्) तथा कुरु। यथा पश्चात्तापो न स्यात् तथा नीतिः विधीयताम्।

कणिकः एवमुक्त्वा संप्रतस्थे, स्व-गृहं गतः! कौरव्यः अपि धृतराष्ट्रः शोकार्तः समपद्यत।

इति श्री महाभारते शतसहस्त्र्यां संहितायां कणिक मन्त्रणा।

# पौराणां मतम्

वैशम्पायन उवाच--भारत ! तदा पौराः पाण्डु-पुत्रान् गुणैः समुदितान् दृष्ट्वा, तेषां गुणान् संसत्सु कथयांचक्रिरे। तदा चत्वरेषु, सभासु च संभूय ज्येष्ठं पाण्डु-सुतं संप्राप्तम्, राज्य-प्राप्तिं च कथयन्ति स्म। "जनेश्वरः धृतराष्ट्रः प्रज्ञाचक्षुः, अचक्षुष्ट्वात् राज्यं न प्राप्तवान्, स कथं नृपतिः भवेत्। तथा शान्तनवः भीष्मः सत्य-सन्धः, महाव्रतः। सः पुरा प्रत्याख्याय, न जातु राज्यं ग्रहीष्यति। ते वयमद्य सत्य-कारुण्य-वेदिनं, तरुणं वृद्ध-शीलिनं पाण्डव-ज्येष्ठं साधु अभिषिञ्चाम। स हि धर्म-वित्, शान्तनवं भीष्मं, धृतराष्ट्रं च सपुत्रं पूजयन् विविधैः भोगैः योजयिष्यति।"

दुर्मतिः दुर्योधनः तेषां युधिष्ठिरानुरक्तानां जल्पतां तानि वाक्यानि श्रुत्वा पर्यतप्यत। स दुष्टात्मा तप्यमानः तेषां वाचो न चक्षमे। ईर्ष्यया चापि संतप्तः धृतराष्ट्र-मुपागमत्। ततः पश्चात्, विरहितं दृष्ट्वा, सः पौरानुराग-संतप्तः पितरं प्रतिपूज्य इदम् अभाषत।

दुर्योधन उवाच—"तात मया*जल्पतां पौराणां अशिवाः गिरः श्रुताः* त्वां भीष्मं च अनादृत्य, पाण्डवं पतिम् इच्छन्ति। भीष्मस्य च एतत् मतं 'स राज्यं न बुभुक्षति'। पुरे जनाः अस्माकं परां पीडां चिकीर्षन्ति। पुरा पाण्डुः

* मे श्रुत्वा इति आर्षः प्रयोगः। १४३।३२

आत्मगुणैः पितृतः राज्यं प्राप्तवान्। त्वम् अन्ध-गुण-संयोगात् प्राप्तं राज्यं न लब्धवान्। स एष पाण्डवः यदि पाण्डोः दायाद्यं प्राप्नोति, तस्य पुत्रः (राज्यं) ध्रुवं प्राप्तः, तस्य तस्य अपि च अपरः।

जगतीपते! ते वयं सुतैर् अपि सह राजवंशेन हीनाः लोकस्य अवज्ञाताः भविष्यामः।

सततं निरयं प्राप्ताः पर-पिण्डोपजीविनः।
न भवेम यथा राजन्, तथानीतिर्विधीयताम्॥
१४३। ३७

राजन्! यदि त्वं हि पुरा राज्यम् अवाप्तवान्, अवशेऽपि जने, वयं ध्रुवं राज्यम् प्राप्स्यामः।

वैशम्पायन उवाच—प्रज्ञा-चक्षुः सः नराधिपः धृतराष्ट्रः पुत्रस्य, कणिकस्य च एवं तानि वाक्यानि सर्वशः श्रुत्वा शोकार्तः द्विधा-चित्तः समपद्यत।

दुर्योधनः च, कर्णः च, तथा सौबलः शकुनिः, दुःशासन-चतुर्थाः ते एकतः मन्त्रयामासुः। ततो दुर्योधनो राजा धृतराष्ट्रम् अभाषत—'पाण्डवेभ्यः भयं न स्यात् (अतः) भवान् तान् निपुणेन अभ्युपायेन वारणावतं नगरं निवासयताम्।"

धृतराष्ट्रः तु पुत्रेण ईरितं वचनं श्रुत्वा मुहूर्तम् इव

सञ्चिन्त्य, अथ दुर्योधनम् अब्रवीत्—

"धर्मपरायणः पाण्डुः सदा सर्वेषु ज्ञातिषु मयि तु विशेषतः धर्म-नित्यः आसीत् । असौ भोजनादि चिकीर्षितं किञ्चिदपि न विजानाति । धृतव्रतः नित्यं मम राज्यं निवेदयति । तस्य पुत्रो यथा पाण्डुः तथा धर्मपरायणः गुणवान्, लोक-विख्यातः पौरवाणां सु-सम्मतः स विशेषतः ससहायः इतः पितृपैतामहाद् राज्यात् कथं बलात् अपाकर्तुं शक्यः । पाण्डुना हि अमात्या भृताः सततं बलं च भृतम्, तेषाम् अपि पुत्राः पौत्राः च विशेषतः भृताः तात । पुरा पाण्डुना सत्कृताः नागरा जनाः युधिष्ठिरस्यार्थे सबान्धवान् कथं न हन्युः ।"

दुर्योधन उवाच—"तात ! एवम् एतत् दोषम् मया आत्मनि भावितम् । दृष्ट्वा सर्वाः प्रकृतयः अर्थमानेन पूजिताः । ते प्रधानतः अस्मत्सहायाः ध्रुवं भविष्यन्ति । महीपते ! सहामात्यः अर्थ-वर्गः अद्य मत्संस्थः स भवान् मृदुना अभ्युपायेन पाण्डवान् वारणावतं नगरम् आशु विवासयितुम् अर्हति । राजन् ! यदा राज्यं मयि प्रतिष्ठितं भविष्यति भारत ! तदा सहापत्या कुन्ती पुनर् एष्यति ।"

धृतराष्ट्र उवाच—"दुर्योधन ! मामपि हृदि एतत् सं-परिवर्त्तते । अभिप्रायस्य पापत्वात् तु अहम् एवं न विवृणोमि ।

न च भीष्मः, न च द्रोणः न च क्षत्ता, न गौतमः कर्हिचित् विवास्यमानान् कौन्तेयान् अनु-संस्यन्ति। पुत्रक ! वयं ते च कौरवेयाणां हि समाः। एते धर्म-युक्ताः मनस्विनः विषमं न इच्छेयुः। तात ते वयम् एतेषां महात्मनां कौरवेयाणाम् तथा जगतः कथं वध्यतां न गच्छेम।"

दुर्योधन उवाच—"भीष्मः सततं मध्यस्थः। द्रोण-पुत्रः मयि स्थितः, यतः पुत्रस् ततो द्रोणो नात्र संशयः यत एतौ ततः शारद्वतः कृपः भवेत्, सः भागिनेयं द्रोणं च कर्हिचित् न त्यक्ष्यति। क्षत्ता अर्थवद्धस् तु अस्माकं, प्रच्छन्नः परैः संयतः, स एकः पाण्डवार्थे अस्मान् बाधितुं न समर्थः। अद्यैव मात्रा सह पाण्डु-पुत्रान् सुविश्रब्धः वारणावतं प्रवासय, यथा यान्ति तथा कुरु। हृदि घोरं विनिद्र-करणं, शल्यमिव अर्पितम् उद्भूतं पावकं शोकम् एतेन कर्मणा नाशय।

इति श्री महाभारते शतसहस्र्यां संहितायां पौराणाम् मतम्।

## वारणावत-यात्रा

वैशम्पायन उवाच—तत: सहानुजः राजा दुर्योधनः शनैः सर्वाः प्रकृतयः अर्थ-मानप्रदानाभ्यां संजहार। ते केचित् कुशल-मन्त्रिणः धृतराष्ट्र प्रयुक्ताः वारणावतं नगरं रम्यं कथयाञ्चक्रिरे। पुंसां मनोरमे सर्व-रत्न-समाकीर्णे देशे वारणावते पशुपतेः नगरे अयं रमणीयतमः सुमहान् समाज उपस्थितः इति एवं धृतराष्ट्रस्य वचनात् कथाः चक्रिरे। नृप! रम्ये वारणावते नगरे तथा कथ्यमाने पाण्डूनां तत्र गमने मतिः जज्ञे।

यदा अम्बिका-सुतो नृपः जातकौतुहला इति अमन्यत तदा एतान् पाण्डवान् एत्य उवाच।

धृतराष्ट्र उवाच—"मम एते पुरुषाः नित्यं पुनः पुनः कथयन्ति, 'लोके वारणावतं नगरं रमणीयतमम् ताताः! यदि मन्यध्वम्! वारणावते उत्सवं, सगणाः सान्वयाः चैव यथा अमराः विहरध्वम्। सुवर्चसःदेवाः इव ब्राह्मणेभ्यः गायकेभ्यः च सर्वशः यथा-कामं रत्नानि प्रयच्छत*। एवं कंचित् कालं विहृत्य, परां मुदाम् अनुभूय इदं वै हास्तिन-पुरं सुखिनः पुनर् एष्यथ।

वैशम्पायन उवाच—युधिष्ठिरः धृतराष्ट्रस्य तं कामम्, आत्मनः च असहायत्वम् अनुबुद्ध्वा तं तथा इति

*प्रयच्छध्वम् इति आर्षः प्रयोगः १४५।६

प्रत्युवाच ।

ततः तदा शान्तनवं भीष्मं, महामतिं विदुरं, द्रोणं वाह्लिकं, कौरवं च सोमदत्तम्, आचार्यपुत्रं, कृपम्, भूरिश्रवसम् एव च, अन्यान् मान्यान् अमात्यान्, तपो-धनान् ब्राह्मणान्, पुरोहितान्, पौरान् च, यशस्विनीं गान्धारीं च दीनः युधिष्ठिरः शनैः इदं वचः उवाच--"धृतराष्ट्रस्य शासनात् सर्वे सगणाः तत्र प्रसन्न-मनसो यास्यामः । पुण्या वाचो विमुञ्चत । आशीर्भिः बृंहितान् अस्मान् पापं न प्रसहिष्यते"।

पाण्डु-पुत्रेण एवम् उक्ताः ते सर्वे कौरवाः प्रसन्न-वदनाः भूत्वा पाण्डवान् अन्ववर्त्तन्त ।

स्वस्त्यस्तु वः पथि, सदा भूतेभ्यः च सर्वशः ।
मा वो ऽस्त्वशुभं किञ्चित् सर्वशः पाण्डुनन्दनाः ॥

ततः कृत-स्वस्त्ययना पार्थिवाः राज्य-लम्भाय सर्वाणि कार्याणि कृत्वा वारणावतं प्रत्ययुः ।

पुरोचनोपदेशः—वैशम्पायन उवाच—भारत ! राज्ञा तु पाण्डु-पुत्रेषु एवम् उक्तेषु स दुरात्मवान् दुर्योधनः परं हर्षम् अगच्छत् । भरतर्षभ । स पुरोचनम् दक्षिणे पाणौ गृहीत्वा, एकान्तम् आनीय सचिवं वाक्यम् अब्रवीत्— "पुरोचन ! मम वसुन्धरा वसु-संपूर्णा, यथा इयं मम तद्वत् ते, स (त्वम्) तां रक्षितुम् अर्हसि । न हि अन्यः कश्चित्

तथा विश्वासिकतरः सहायः, येन संधाय मन्त्रयेयम्, यथा त्वया। तात! मन्त्रं संरक्ष। मम सपत्नान् च उद्धर। यद् ब्रवीमि निपुणेन अभ्युपायेन तथा कुरु। पाण्डवाः धृतराष्ट्रेण वारणावतं प्रेषिता, धृतराष्ट्रस्य शासनात् उत्सवे विहरिष्यन्ति। स त्वं रासभ-युक्तेन आशुगामिना स्यन्दनेन वारणावतं यथा अद्यैव यासि तथा कुरु। तत्र गत्वा, नगरोपान्तम् आश्रित्य चतुः शालं, परम-संवृतम् महाधनं गृहं कारयेथाः।

उत शण-सर्ज-रसादीनि यानि कानिचित् आग्नेयानि द्रव्याणि इह सन्ति तानि तत्र प्रदापय। मृत्तिकां च सर्पिः-तैल-वसाभिश् च, अनल्पया लाक्षया च मिश्रयित्वा तं लेपं कुड्येषु दापय। तस्मिन् वेश्मनि शणं, तैलं, घृतं, जतु, दारूणि चैव हि समन्ततः सर्वाणि निक्षिपेथाः। यथा परीक्षमाणाः*१अपि पाण्डवाः, अन्ये अपि च मानवाः आग्नेयं, तत्कार्यम् अपि च न पश्येयुः*२। तत्र गत्वा, एवं कृते वेश्मनि तान् परमार्चितान् पाण्डवान् ससुहृज्जनां कुन्तीं च वासयेथाः।

पाण्डूनाम् आसनानि, यानानि, शयनानि, च दिव्यानि विधातव्यानि यथा वै पिता तुष्येत्। वारणावते

*१ परिक्षन्तः इत्यार्षः प्रयोगः १४३।१२
*२ पश्येरन् " " "

नगरे यथा च तत् न विजानन्ति, यावत् कालस्य पर्ययः, तथा सर्वं विधातव्यम् । —

तान् सुविश्वस्तान् अकुतोभयान् शयानान् च ज्ञात्वा त्वया तस्य वेश्मनः द्वारतः अग्निः देयः ।

ततो जनाः 'स्वके गेहे दह्यमाने दग्धाः, इति पाण्डवा-र्थाय वै कर्हिचित् अस्मान् न गर्हेयुः ।

स पुरोचनः कौरवाय तथा इति प्रतिज्ञाय आशुगामिना रासभयुक्तेन स्यन्दनेन प्रायात् । राजन दुर्योधन-मते स्थितः स पुरोचनः त्वरितं गत्वा राजपुत्रेण यथोक्तं सर्वं चक्रे ।



## वारणावत-गमनम्

पाण्डवाः तु सदश्वैः अनिलोपमैः रथान् युक्त्वा आरोहमाणाः भीष्मस्य, राज्ञः धृतराष्ट्रस्य, महात्मनः द्रोणस्य कृपस्य, विदुरस्य, अन्येषां चैव वृद्धानां पादौ आर्तवत् जगृहुः। यतव्रताः एवं सर्वान् कुरुवृद्धान् अभिवाद्य समानान् वै समालिङ्ग्य बालैः च अपि अभिवादितः, तथा सर्वाः मातृः आपृच्छ्य वारणावतं प्रययुः। सर्वाः प्रकृतयः च, महाप्राज्ञः विदुरः च, तथान्ये कुरु-पुङ्गवाः, पौरा च शोककर्षिताः पुरुष-व्याघ्रान् अन्वयुः।

तदा तत्र केचिद् निर्भयाः ब्राह्मणाः भृश-दुःखिताः पाण्डुसुतान् अतीव दीनान् दृष्ट्वा ब्रुवन्ति स्म—

विषमं पश्यते* राजा सर्वथा स सुमन्दधीः।
कौरव्यो धृतराष्ट्रस्तु, न च धर्मं प्रपश्यति॥

१४७।७

अपापात्मा पाण्डवः बलिनां श्रेष्ठः भीमो वा कौन्तेयो वा धनञ्जयः न हि पापं रोचयिष्यति। महात्मानौ माद्री-पुत्रौ कुत एवं करिष्यतः। धृतराष्ट्रः पितृतः राज्यं प्राप्तान् तान् न मृष्यते। इदम् अत्यन्तम् अधर्म्यम् कथं भीष्मो अनुमन्यते यः अस्थाने नगरे विवास्यमानान्

---

*पर्यशिति इति तु आधुनिकः पाठः दृश्यते।

अभिमन्यते ।

पुरा शान्तनवः कुरुनन्दनः पाण्डुः, राजर्षिः विचित्र-वीर्यः अस्माकं नृपः पिता इव अभूत् ।

स धृतराष्ट्रः तस्मिन् पुरुष-व्याघ्रे देवभावं-गते सति इमान् राज पुत्रान् बालान् न मृष्यते । वयं सर्वे एव एतद् अनिच्छन्तः, गृहान् विहाय पुत्रोत्तमात् गच्छामः, यत्र युधिष्ठिरः गन्ता ।

धर्मराजो युधिष्ठिरः दुःखकर्षितः तान् तथा-वादिनः दुःखितान् पौरान् मनसा ध्यात्वा उवाच—पृथिवी-पतिः श्रेष्ठः, गुरुः, मान्यः यदाह, अस्माभिः अशंकमानैः तत् कार्यम्, इति नः व्रतम् । भवन्तः अस्माकं सुहृदः, अस्मान् प्रदक्षिणं कृत्वा, तथा आशीर्भिः प्रतिनन्द्य, यथागृहं निर्वर्तध्वम् । यदा तु भवद्भिर् अस्माकं कार्यम् उपपत्स्यते, तदा अस्माकं प्रियाणि हितानि च करिष्यथ ।"

ततः पौराः एवमुक्ताः, प्रदक्षिणं च कृत्वा, आशीर्भिः चैव हि एतान् अभिनन्द्य, नगरम् एव जग्मुः ।

सर्व-धर्म-वित् विदुरः, पौरेषु विनिवृत्तेषु, पांडवश्रेष्ठं बोधयन् इदम् वचनम् अब्रवीत्—

प्राज्ञः प्राज्ञप्रलापज्ञः, प्रलापज्ञम् इदं वचः ।
प्राज्ञं प्राज्ञः प्रलापज्ञः, प्रलापज्ञं वचो ऽब्रवीत् ॥

१४७--२०

यः नीतिशास्त्रानुसारिणीं पर-प्रज्ञां जानाति इह विज्ञाय तथा कुर्यात् यथा आपदं निस्तरेत्। अलोहम्, निशितं, शरीर-परिकर्तनम् शास्त्रम् यो वेत्ति, तम् प्रति-घात-विदं तु द्विषः न घ्नन्ति। महा-कक्षे कक्षघ्नः शिशिरघ्नः च बिलौकसः न दहेदिति च आत्मानं यो रक्षति स जीवति।

नाचक्षुर्वेत्ति पन्थानं, नाचक्षुर्विन्दते दिशः।

नाधृतिर्बुद्धिमाप्नोति, बुध्यस्वैनं प्रबोधितः ॥२४॥

नरः अलोहजं शस्त्रम् अनाप्तैः दत्तं आदद श्वाविद् शरणम् आसाद्य हुताशनात् प्रमुच्येत।

चरन् मार्गान् विजानाति, नक्षत्रैः विन्दते दिशः।

आत्मना चात्मनः पञ्च पीडयन् नानुपीड्यते ॥२६॥

धर्मराजः, पाण्डवो, युधिष्ठिरः एवम् उक्तः विदुषां श्रेष्ठं विदुरं प्रत्युवाच—"विज्ञातम्" इति।

अनुगम्य, अनुशिक्ष्य, प्रदक्षिणां कृत्वा ( गच्छतः ) तान् पाण्डवान् अभ्यनुज्ञाय विदुरः गृहान् प्रययौ।

विदुरे, भीष्मे, तथा पौर-जने निवृत्ते कुन्ती अजात-शत्रुम् आसाद्य वचनम् अब्रवीत्—'जनमध्ये क्षत्ता अब्रुवन् इव यद् वाक्यम् अब्रवीत्, त्वया च स तथा इति उक्तः,

वयं च तद् न जानीमः। तस्य तव च सर्वं संवादं श्रोतुम् इच्छामि, यदि इदं अस्माभिः ज्ञातुं शक्यं न च सदोषवत्।"

युधिष्ठिर उवाच—"धर्म-धीः विदुरो माम् अब्रवीत्—'गृहाद् अग्निः च बोद्धव्यः, कश्चित् पन्था (कर्तव्यः), यः अविदितः न स्यात् इति। जितेन्द्रियः च वसुधां प्राप्स्यति इति च अब्रवीत्, मया च तत्सर्वं विज्ञातम् इति विदुरः प्रत्युक्तः।

वैशम्पायन उवाच—ते फाल्गुनस्य अष्टमे अहनि, रोहिण्यां प्रयाताः, वारणावतम् आसाद्य नागरं जनं ददृशुः।

ततः सर्वाः प्रकृतयः पाण्डु-पुत्रान् आगतान् श्रुत्वा, यथाशास्त्रं सर्व-मङ्गल-संयुक्ताः, अतन्द्रिताःसहस्रशः परया मुदा नाना-यानैः नर-श्रेष्ठान् अभिजग्मुः। ते सर्वे वारणावतकाः जनाः कौन्तेयान् समासाद्य जयाशिषः कृत्वा परिवार्य अवतस्थिरे। तैः परिवृतः पुरुषव्याघ्रो धर्मराजो-युधिष्ठिरः अमरैः वज्रपाणिः इव देव-संकाशो बभौ। अनघ! ते पौरैः सत्कृताः पौरान् सत्कृत्य अलंकृतं जनाकीर्णं वारणावतं विविशुः। महीपाल! अथो ते वीराः पुरीं प्रविश्य स्वेषु कर्मसु रतानां ब्राह्मणानां गृहान् तूर्णं जग्मुः।

नगराधिकृतानां च गृहाणि रथिनां तदा।
उपतस्थुः नर-श्रेष्ठाः वैश्य-शूद्र-गृहाण्यपि॥
आ. प. अ. १४८।७

भरतर्षभ! पश्चात् पौरैः नरैः अर्चिताः पाण्डवाः पुरोचन-पुरः-सराः आवसथं जग्मुः। स पुरोचनः तेभ्यः भक्ष्याणि पानानि, शुभानि शयनानि मुख्यानि च आसनानि प्रददौ। तत्र तेन सत्कृताः सुमहार्ह-परिच्छदाः पुर-निवासिभिः पुरुषैः उपास्यमानाः ऊषुः।

तदा पुरोचनः तत्र दश-रात्रोषितान् * तान् अशिवं शिवाख्यं गृहं निवेदयामास। ते पुरुष-व्याघ्राः तत्र सपरिच्छदाः पुरोचनस्य वचनात् कैलाशम् इव गुह्यकाः विविशुः। सर्व-धर्म-भृतांवरः युधिष्ठिरः च तत् आगारं प्रेक्ष्य आग्नेयम् इति एवं भीमसेनम् उवाच—"परंतप! अस्य सर्पिर्जतु-विमिश्रितं वसागन्धं जिघ्राण* । व्यक्तम् हि इदं वेश्म आग्नेयं कृतम्। गृह-कर्मणि व्यक्तं शण-सर्जरसं घृतोक्षितं सर्वं मुञ्ज-बल्वज-वंशादि-द्रव्यम् आनीय आप्तैः वेश्म-कर्मणि विनीतैः शिल्पिभिः सुकृतम्। अयं पापः पुरोचनः माम् विश्वस्तं दग्धुकामः। सुयोधन-वशे स्थितः मन्दः तथा हि वर्तते। महाबुद्धिः विदुरः ताम्

*दश रात्रोषितानां तेषां इति आर्षः प्रयोगः १४८–११
* जिघ्राणः इति आर्षः प्रयोगः १४८–१४

इमां तदा दृष्टवान्। तेन पार्थ! पुरा स माम् आपदं सम्बोधितवान्। नित्यम् अस्मद्धितैषिणा तेन कनीयसा पित्रा स्नेहात् ते वयं बुद्धिमन्तः दुर्योधन-वशानुगैः अनार्यैः गूढैः सुकृतं गृहं बोधिताः।"

भीमसेन उवाच—"यदि भवान् इदं गृहम् आग्नेयं विहितं मन्यते, तत्र एव साधु गच्छामः यत्र वयं पूर्वोषिताः।"

युधिष्ठिर उवाच—"इतः ध्रुवाम् इष्टां गतिं निचिन्वद्भिः, अप्रमत्तैः यत्तैः निराकारैः वस्तव्यम् इति रोचये। यदि सः पुरोचनः अस्माकम् अकारं विन्देत, ततः क्षिप्रकारी भूत्वा, प्रसह्य अपि नः दहेत। अयं पुरोचनः उपक्रोशात् अधर्माद् वा न बिभेति, मन्दः सुयोधन-वशे स्थितः, तथा हि वर्तते। अस्माकं पितामहः अयं भीष्मः प्रदग्धेषु (अस्मत्सु) कोपं कुर्यात्, किमर्थं वा सः कौरवान् कोपयीत। अथवा अस्माकं पितामहः भीष्मः, अन्ये च कुरुपुङ्गवः अस्मासु*१ दग्धेषु धर्म इति एव कुप्येयुः*३ यदि हि वयं दाहात्*२ विभ्यतः प्रद्रवेम सः राज्य-लुब्धः सुयोधनः नः सर्वान् स्पशैः घातयेत्।

---

*१ अस्माकम् इत्यार्षः प्रयोगः १४८-२५

*२ कुप्येरन् इत्यार्ष प्रयोगः १४८-२५

*३ दाहस्य इत्यार्ष प्रयोगः १४८-२६

अपद्स्थान् पदे तिष्ठन्, अपक्षान् पक्ष-संस्थितः ।
हीन-कोषान्महाकोशः प्रयोगैः घातयेद् ध्रुवम् ॥
आ० प० १४८।२७

तद् अस्माभिः इमं पापं, तं च पापं सुयोधनं वञ्चयद्भिः छन्नावासं क्वचित् क्वचित् निवस्तव्यम् । ते वयं मृगया-शीलाः इमां वसुधाम् चराम । तथा पलायतां नः मार्गा विदिताः भविष्यन्ति । अद्य एव सुसंवृतं भौमं बिलं करवाम । तत्र गूढोच्छ्वासान् नः हुताशः न संप्रधक्ष्यति । यथा पुरोचनः पौरो वा अपि कश्चित् जनः वसतः अस्मान् न बुध्येत तथा अतिन्द्रितैः कार्यम् ।

इति श्री महाभारते शतसहस्र्यां संहितायां वारणावत-यात्रा ।



# जतु-गृह-वासः

वैशम्पायन उवाच–राजन्! विदुरस्य सुहृत् नरः कुशलः खनकः विविक्ते पाण्डवान् इदं वचनम् अब्रवीत्–"पाण्डवानां प्रियं कार्यम्' इति विदुरेण हि अहं कुशलः खनकः प्रहितः अस्मि। वः किं करवाणि! विदुरेण प्रच्छन्नम् उक्तः–'त्वम् विश्वासात् इह पाण्डवान् श्रेयः प्रतिपादय इति' वः किं करवाणि। पुरोचनः कृष्ण-पक्षे अस्यां चतुर्दश्यां तव भवनस्य द्वारि हुताशनं प्रदास्यति। तस्य दुर्मतेः धार्त-राष्ट्रस्य 'पुरुषर्षभाः पाण्डवाः मात्रा सह प्रदग्धव्याः' इति व्यवसितम्। पाण्डव! म्लेच्छ-वाचा विदुरेण किञ्चित् च उक्तः असि, त्वया च तत् तथा इति उक्तम्। एतत् विश्वास-कारणम्।

कुन्ती-पुत्रः सत्यधीः युधिष्ठिरः तम् उवाच–"सौम्य! त्वां वै विदुरस्य सुहृदम् शुचिम् आप्तं, प्रियं, सदा चैव दृढ-भक्तिकम् अभिजानामि। कवेः किञ्चित् अविज्ञातं प्रयोजनं न विद्यते।

त्वं यथा तस्य, तथा नः, वयं त्वयि निर्विशेषाः यथा तस्य ( तथा ) भवतः, यथा कविः (तथा) अस्मान् पालय। धार्त-राष्ट्रस्य शासनात् पुरोचनेन इदं शरणं मदर्थम् आग्नेयं विहितम्। स दुर्मतिः, पापः, ससहायः,

कोशवान् एव च, पापात्मा अस्मान् अपि नित्य-कालं प्रबाधते। स भवान् अस्माद् हुताशनात् यत्नेन अस्मान् मोचयतु। अस्मासु इह दग्धेषु सुयोधनः सकामः स्यात्। तस्य दुरात्मनः इदम् आयुधागारं समृद्धं वप्रान्तं निष्प्रतिकारम्- इदम् आश्रित्य, महत् कृतम्। विदुरः प्रागेव तस्य नूनम् इदं चिकीर्षितम् अशुभं कर्म वेद, तेन अस्मान् अन्वबोधयत्। सा इयम् आपत् अनुप्राप्ता, यां पुरा क्षत्ता दृष्टवान्, त्वम् पुरोचनस्य अविदितान् अस्मान् प्रतिमोचय। सः खनकः तथा इति प्रतिश्रुत्य यत्नम् आस्थितः, परिखाम् नाम उत्किरन् महत् बिलं च चकार। भारत! तस्य वेश्मनः मध्ये कपाटयुक्तम् अति-महत् बिलं, भूम्याः समम् अज्ञातं चक्रे। पुरोचन-भयात् एव मुखं संवृतं व्यदधात्, स अशुभधीः सदा तु तस्य गृहद्वारि वसति।

नृप! तत्र ते सर्वे पाण्डवेयाः सायुधाः क्षपां वसन्ति स्म। दिवा वनाद् वनं मृगयां चरन्ति। राजन्! अविश्वस्ताः विश्वस्तवत् अतुष्टाः तुष्टवत्, परम विस्मिताः पुरोचनं वञ्चयन्तः ऊषुः। विदुरामात्यात् तस्मात् खनकसत्तमात् अन्यत्र नगर-वासिनः नराः च एनान् न अन्वबुध्यन्त।

## जतु-गृह-दाहः

वैशम्पायन उवाच—पुरोचनः तान् परिसंवत्सरोषितान् सुमनसः दृष्ट्वा, विश्वस्तान् इव (च) संलक्ष्य हर्षं चक्रे।

अथ कौन्तेयः धर्मवित् युधिष्ठिरः पुरोचने तथा-हृष्टे भीमसेनार्जुनौ, उभौ च यमौ प्रोवाच—"अयं पापः पुरोचनः अस्मान् सुविश्वस्तान् वेत्ति, अयं नृशंसात्मा वञ्चितः, पलायने कालं मन्ये। आयुधागारं आदीप्य, पुरोचनं चैव दग्ध्वा, षट् प्राणिनः इह निधाय, अनभिलक्षिताः द्रवामः।"

वैशम्पायन उवाच—"महाराज! कुन्ती दानापदेशेन निशि ब्राह्मण-भोजनं चक्रे। तत्र योषितः आजग्मुः। भारत! ताः यथा-कामं विहृत्य, भुक्त्वा, पीत्वा च माधवीम् समनुज्ञाप्य निशि गृहानेव जग्मुः!

तस्मिन् भोज्ये काल-चोदिता पञ्चपुत्रा निषादी यदृच्छया अन्नार्थिनी सपुत्रा समभ्यागात्।

राजन्! सा मदिरां पीत्वा, मत्ता सपुत्रा, मद-विह्वला सर्वैः सुतैः सह तस्मिन् एव निवेशने विगत-ज्ञाना मृतकल्पा सुष्वाप।

अथ तदा निशि जने सुप्ते, तुमुले प्रवाते भीमः यत्र

पुरोचनः शेते तत् उपादीपयत् । ततः पाण्डवः जतु-गृह-द्वारे दीपयामास । पश्चात् तत्र निवेशने समन्ततः अग्निं ददौ ।

पाण्डु-नन्दनाः सर्वे तत् गृहम् आदीप्तं तु ज्ञात्वा मात्रा सार्धम् अरिन्दमाः सुरङ्गां तूर्णं विविशुः ।

ततः विभावसोः सुमहान् प्रतापः शब्दः च एव प्रादुर् आसीत् । तेन स जन-व्रजः बुबुधे । कृशाननाः पौराः तद् गृहं दीप्तम् अवेक्ष्य आहुः—"दुर्योधन-प्रयुक्तेन अकृत-बुद्धिना पापेन गृहम् आत्म-विनाशाय कारितं तत् च दाहितम् । अहो ! धिक् ! धृतराष्ट्रस्य बुद्धिः, यः न अति समञ्जसा शुचीन् पाण्डु-दायादान् शत्रुवत् दाहयामास । अयम् पापात्मा अति दुर्मतिः तु इदानीं दिष्ट्या दग्धः यः अनागसः सु-विश्वस्तान् नरोत्तमान् ददाह ।"

वैशम्पायन उवाच—'ते वारणावतकाः जनाः एवं विलपन्ति स्म, तद् गृहं परिवार्य समन्ततः रात्रौ तस्थुः ।

ते सर्वे पाण्डवाः अपि सुदुःखिताः मात्रा सह तेन बिलेन निर्गत्य अलक्षिता द्रुतं जग्मुः । परन्तपाः पाण्डवाः तेन साध्वसेन निद्रोपरोधेन च मात्रा सह सहसा गन्तुं न शेकुः ।

राजेन्द्र ! भीमसेनः तु भीम-वेग-पराक्रमः सर्वान्

भ्रातॄन् मातरम् एव च आदाय जगाम। वीर्यवान् महाबलः जननीं स्कन्धम् आरोप्य, यमौ अङ्केन, भ्रातरौ च पाणिभ्यां गृहीत्वा, पथि उरसा पादपान् भञ्जन् महीं पद्भ्यां विदारयन्, स तेजस्वी वात रंहो वृकोदरः आशुः जगाम।

अथ रात्र्यां व्यतीतायाम् अशेषो नागरो जनः पाण्डुनन्दनान् दिदृक्षुः त्वरितः तत्र आजगाम। ततः ते जनाः ज्वलनं निर्वापयन्तः तद् जातुषं गृहम् अमात्यं च पुरोचनम् दग्धं ददृशुः।

पापकर्मणा दुर्योधनेन पाण्डवानां विनाशाय इदं विहितम् इति ते जनाः चुक्रुशुः। धृतराष्ट्रस्य विदिते धार्तराष्ट्रः पाण्डु-दायादान् दग्धवान् न संशयः। न हि एनं प्रतिषिद्धवान्। ननु शान्तनवः न अति इह धर्मम् अनुवर्त्तते। द्रोणः च विदुरः चैव, कृपः च, अन्ये च कौरवाः।

ते वयं दुरात्मनः धृतराष्ट्रस्य प्रेषयामः—ते परः कामः संवृत्तः, पाण्डवान् दग्धवान् असि।'

ततः पाण्डवार्थे हुताशनं व्यपोहमानाः ते पञ्च पुत्रां निषादीम् अनागसं दग्धां ददृशुः। तेन एव खनकेन वेश्म-शोधयता तद् बिलं पांसुभिः पिहितम्, तच्च पुरुषैः न लक्षितम्।

ततः ते नागराः 'अग्निदग्धान् पाण्डवान्, अमात्यं च पुरोचनम्' धृतराष्ट्रस्य ज्ञापयामासुः। राजा धृतराष्ट्रः तत् सुमहद् अप्रियं पाण्डुपुत्राणां विनाशं श्रुत्वा सु-दुःखितः विललाप—'अद्य मम विशेषतः मात्रा सह तेषु वीरेषु दग्धेषु मम भ्राता महा-यशाः राजा पाण्डुः मृतः। पुरुषाः शीघ्रं वारणावतं नगरं गच्छन्तु, तान् वीरान्, तां कुन्तीं-राजसुतां च सत्कारयन्तु। बृहन्ति शुभानि च कुल्यानि कारयन्तु। ये च तत्र मृताः तेषां सुहृदो अपि तान् यान्तु। एवं गते पाण्डवानां कुन्त्याः च यत् यत् हितं मया कारयितुं शक्यं तत्सर्वं धनैः क्रियताम्।

सर्वे भृशं शोक-परामणाः सहिता रुरुदुः। अपरे च हा युधिष्ठिर कौरव्य! हा भीम! इति। अन्ये च हा फाल्गुन! इति। अपरे च हा यमौ! इति। अन्ये पौर-जनाश्च एवं पाण्डवान् अन्वशोचन्त।

इति श्री महाभारते शतसाहस्र्यां जतुगृहदाहः।



## गङ्गोत्तरणं वन-प्रवेशः च

वैशम्पायन उवाच–एतस्मिन् एव काले तु कविः विदुरः यथा संप्रत्ययः तद्वने शुचिं पुरुषं प्रेषयामास। स यथोद्देशं गत्वा वने नदी-जलं मापयमानान् * जनन्या सह पाण्डवान् ददर्श १*

ततः तदा विदुरेण प्रवासितः विद्वान् नरः शिवे भागीरथी-तीरे, विस्रम्भिभिः नरैः कृतां, यन्त्रयुक्तां, पताकिनीम्, सर्व-वातसहां, मनो-मारुत-गामिनीं नावं पार्थान् २* दर्शयामास।

ततो अथ पुनः उवाच—"युधिष्ठर! संज्ञार्थं कवेः इदं वचनं, पूर्व-चोदितम्, ज्ञापकं निबोध—

कक्षघ्नः शिशिरघ्नः, महाकक्षे बिलौकसः।
न हन्तीत्येवमात्मानं, यो रक्षति स जीवति।

आ. प. १५१।७

अनया संज्ञया तेन मां प्रेषितं विश्वस्तं विद्धि। सर्वतः अर्थ-वित् क्षत्ता विदुरः मां भूयः चैव आह। कौन्तेय! रणे कर्णं, भ्रातृभिःसहितं च दुर्योधनं,

---

* १ मापयानान ददृशे इत्यार्षः प्रयोगः १५१।२
* २ पार्थानाम् ,, १५१।४

शकुनिं च एव विजेता असि न संशयः । इयम् अप्सु सुख-गामिनी नौः वारिपथे युक्ता वः सर्वान् अस्मात् वनोद्देशात् मोचयिष्यति न संशयः ।"

अथ मात्रा सह तान्-नरोत्तमान् व्यथितान् दृष्ट्वा नावम् आरोप्य, गङ्गायां प्रस्थितान् पुनः अब्रवीत्—

विदुरो मूर्धन्युपाघ्राय, परिष्वज्य वचो मुहुः ।
अरिष्टं गच्छताव्यग्राः,पन्थानमिति चाब्रवीत् ॥

आ० प० १५१।१२

इति उक्त्वा स विदुर-चोदितः पुमान् वीरान् नरर्षभान् नावा गङ्गां तारयामास । ततो अथ गङ्गां तारयित्वा सर्वशः पारं प्राप्तान् जयाशिषः प्रयुज्य स हि यथागतम् अगात् ।

महात्मानः पाण्डवाः च गङ्गाम् उत्तीर्य, कवये* प्रतिसंदिश्य, वेगेन अलक्षिताः गूढं जग्मुः । ततः नावं परित्यज्य, निशि नक्षत्रगणसूचितं पन्थानं विज्ञाय दक्षिणं दिशं प्रययुः । राजन् ! यतमाना गहनं वनं प्रपेदिरे ।

ततः श्रान्ताः पिपासार्ताः निद्रान्धाः पाण्डुनन्दनाः महावीर्य-भीमसेनम् इदं वचः ऊचुः—"इतः कष्टतरं नु किम् ? यद् वयं गहने वने दिशं न विजानीमः, गन्तुं च नैव शक्नुमः । तं च पापं न जानीमः, यदि पुरोचनः

---

* कवेः इत्यार्षः प्रयोगः । १५८।१५

दग्धः । अलक्षिताः अस्माद् भयात् कथं नु विप्रमुच्येम । भारत ! त्वं हि नः एकः यथा सततंगः तथा बलवान् । पुनः अस्मान् उपादाय तथैव व्रज ।' इति उक्तः धर्मराजेन महाबलः भीम-सेनः कुन्तीं भ्रातॄन् च आदाय आशु जगाम ।

वैशम्पायन उवाच—विक्रममाणेन तेन ऊरुवेग-समीरितं वनं स-वृक्ष-विटपं व्याघूर्णितम् इव अभवत् । अस्य जङ्घावातो ववौ यथा शुचिशुक्रागमे । महाबलः आवर्जित-लतावृक्षं मार्गं चक्रे । स पुष्पितान् फलितान् चैव वनस्पतीन् मृद्नन्, त्रिः-प्रस्रुत-मदः,शुष्मी, सरोषितः षष्ठिवर्षी मतङ्गराट् इव क्रुद्धः तस्य पथः समीपजान् गुल्मान् अवरुज्य, वने महाद्रुमान् भञ्जन् ययौ । तार्क्ष्य-मारुत-रंहसः वेगेन गच्छतः तस्य भीमस्य पाण्डु-पुत्राणां मूर्छेव समजायत । सुकुमारीं यशस्विनीं मातरं रोधःसु विषमेषु च कृच्छ्रेण पृष्ठेन अवहत् ।

भरतर्षभ ! सायाह्ने घोरं क्रूर-पक्षिमृगम् अल्प-मूल-फलोदकं वनोद्देशम् अगमत् । सन्ध्या घोरा सम-भवत् । दारुणाः मृगपक्षिणः । राजन् ! आसन्नार्तवैः वातैः नाना भग्नावभग्न-भूयिष्ठैः, नाना-द्रुम-समाकुलैः, शीर्ण-पर्ण-फलैः, बहुगुल्म-क्षुपैः द्रुमैः सर्वाः दिशः अप्रकाशाः ( समभवन् ) । तदा ते कौरव्याः श्रमेण, तृष्णया, प्रवृद्धया

च निद्रया प्रपीडिताः गन्तुं न अशक्नुवन्। ते सर्वे निरास्वादे महावने न्यविशन्त ह। अथ ततः तृषा-परिक्लान्ता कुन्ती पुत्रान् अब्रवीत्–"पञ्चानां पाण्डवानां माता सती मध्यतः स्थिता तृष्णया हि परीता अस्मि।"

तत् प्रजल्पितं श्रुत्वा मातृ-स्नेहात् भीम-सेनस्य मनः तप्तं कारुण्येन गमनाय उपचक्रमे। ततः भीमः महत् विजनं घोरं वनं प्रविश्य रमणीयं विपुलच्छायं न्यग्रोधं ह ददर्श। प्रभो! भरतर्षभः तत्र तान् सर्वान् निक्षिप्य उवाच–'पानीयं मृगयामि, इह विश्रमध्वम्। एते जल-चारिणः सारसाः मधुरं रुवन्ति। ध्रुवम् अत्र महत् जल-स्थानम् इति मम मतिः।"

भारत! ज्येष्ठेन भ्रात्रा गच्छ इति अनुज्ञातः सः तत्र जगाम यत्र चलचारिणः सारसाः स्म। भरतर्षभ! भ्रातृणां भ्रातृ-वत्सलः स तत्र पानीयं पीत्वा स्नात्वा च तेषाम् अर्थे उत्तरीयेण पानीयं जग्राह आनयामास च। गव्यूति-मात्रात् त्वरितः मातरं प्रति आगत्य वसुधातले भ्रातॄन् मातरं च सुप्तां दृष्ट्वा शोक-दुःख-परीतात्मा वृकोदरः भृशं विललाप–

'अतः किम् नु कष्टतरं द्रष्टव्यं भविष्यति। यत् अद्य सुमन्द-भाक् भ्रातॄन् मही-सुप्तान् पश्यामि। ये पुरा तदा वारणावते परार्ध्येषु शयनेषु निद्रां न अधिजग्मुः ते अद्य

महीतले सुप्ताः। शत्रु-सङ्घावमर्दिनः वसुदेवस्य स्वसारं विचित्रवीर्यस्य स्नुषां, महात्मनः पाण्डोः भार्या, पुण्डरीकोदर-प्रभां सर्वलक्षण-पूजिताम्, अस्मज्जननीं, सुकुमारतरां कुन्तिराज-सुतां कुन्तीं महार्ह-शयनोचिताम् एनां पृथिव्यां शयानाम् अतथोचिताम् अद्य इह पश्यत! या इमान् सुतान् धर्माद् इन्द्रात्, वातात् च सुषुवे सा इयं प्रासाद-शायिनी परिश्रान्ता भूमौ शेते।

मया अतः परं किं नु दुःखतरं द्रष्टुं शक्यम्, योऽहम् अद्य नर-व्याघ्रान् भूतले सुप्तान् पश्यामि! यो धर्मनित्यः त्रिषु लोकेषु राज्यम् अर्हति, सोऽयं कथं परिश्रान्तः प्राकृत-वत् भूमौ शेते! अयं नरेषु अप्रतिमः अर्जुनः नीलाम्बुदश्यामः प्राकृतवत् भूमौ शेते, ततो दुःखतरं नु किम्! यौ इमौ रूप-सम्पदा देवानां अश्विनौ इव तौ इमौ अद्य प्राकृतवत् धरणीतले प्रसुप्तौ।

ज्ञातयो यस्य वै न स्युः विषमाः कुलपांसनाः।
स जीवेत् सुखं लोके, ग्राम-द्रुम इवैकजः॥
१५३।३२

ग्रामे यो हि एकः वृक्षः पर्ण-फलान्वितः भवेत्, (सः) निर्ज्ञातिः अर्चनीयः सुपूजितः चैत्यो भवति। येषां च च बहवः ज्ञातयः धर्मम् आश्रिताः ते लोके सुखं जीवन्ति। निरामयाः च भवन्ति। समृद्धार्था बलवन्तः मित्र-बान्धव-

नन्दन अन्योऽन्यम् आश्रित्य काननजा द्रुमा इव जीवन्ति ।

वयं तु सपुत्रेण दुरात्मना धृतराष्ट्रेण विवासिताः, कथञ्चिद् दैव-संश्रयात् न दग्धाः च । तस्माद् दाहाद् मुक्ताः वयम् इमं वृक्षम् उपाश्रिताः । अनुत्तमं क्लेशं प्राप्ताः कां दिशं प्रति-पत्स्यामः ।

अल्प-दर्शन धार्तराष्ट्र ! दुर्बुद्धे ! स कामो भव नूनं ते देवाः प्रसन्नाः । युधिष्ठिरः ते*१ वधे मे अनुज्ञां न प्रयच्छति । दुर्मते तेन जीवसि ! ननु अद्य क्रोध-समाविष्टः गत्वा ससुतामात्यं सकर्णानुज-सौबलं यमक्षयं प्रेषयिष्ये । पापाचार ! मया किं नु शक्यम्, यत् ते पाण्डव-श्रेष्ठः, धर्मात्मा, युधिष्ठिरः नृपः न क्रुध्यति ।

एवम् उक्त्वा महाबाहुः क्रोध-संदीप्तमानसः करं करेण निष्पिष्य निःश्वसन् शान्तार्चिः पावकः इव पुनः दीनमना भूत्वा वृकोदरः पृथग्जन-समान् इव विश्वस्तान् महीतले सुप्तान् भ्रातॄन् अवैक्षत*२।

नाति दूरेण नगरं वनादस्माद्धि लक्ष्ये ।
जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयम् ॥
१५३।४४

*१ तुभ्यं इति आर्षः प्रयोगः । १५३ ३८

*२ अवेक्षत इत्यार्षः प्रयोगः । १५३।३८

'पश्चात् जित-क्लमाः प्रीतिबुद्धाः इमे जलं पास्यन्ति' इति तदा व्यवस्य एवं भीमः स्वयं जजागार ।

इति श्री महाभारते शतसाहस्र्यां गङ्गोत्तरणं वनप्रवेशः च ।



## व्यास-दर्शनम्

वैशम्पायन उवाच—राजन् ! त्वरमाणाः ते महात्मानः वनात् वनं गत्वा, बहून् मृगगणान् घ्नन्तः रमणीयान् वनोद्देशान् सरांसि च प्रेक्षमाणाः मत्स्यान्, त्रिगर्तान्, पञ्चालान्, अनन्तरेण च कीचकान् अपक्रम्य सर्वे वल्कलाजिन-वाससः, आत्मनः जटाः कृत्वा तापसं वपुः बिभ्रतः कुन्त्या सह ययुः ।

(अथ) ब्राह्मं वेदम् सर्वशः वेदाङ्गानि नीति-शास्त्रं च अधीयानाः सर्वज्ञाः ते पितामहं ददृशुः । तदा महात्मानं कृष्णद्वैपायनम् अभिवाद्य सर्वे परन्तपाः मात्रा सह प्राञ्जलयः तस्थुः ।

व्यास उवाच—"भरतर्षभ ! यथा तु वैः धार्तराष्ट्रैः अधर्मेण विवासिताः इदं व्यसनं मया पूर्वमेव विदितम् । न विषादः अत्र कर्तव्यः, सर्वमेतत् वः

सुखाय । तद् विदित्वा परमं हितं चिकीर्षुः संप्राप्तः अस्मि ।

समास्ते चैव मे सर्वे, यूयं चैव न संशयः ।
दीनतो बालतः चैव, स्नेहं कुर्वन्ति मानवाः ॥
१५८।६

मम साम्प्रतम् युष्मासु स्नेहः तस्माद् अप्यधिकः स्नेह-पूर्वं वः हितं चिकीर्षामि तत् निबोधत । इदम् अभ्याशे निरामयं रमणीयं नगरम् । मम आगमन-कांक्षिणः इह प्रतिछन्नाः वसत ।

वैशम्पायन उवाच—सः सत्यवतीसुतः प्रभुः व्यासः तान् एवं समाश्वस्य, कुन्तीं च आश्वासयत् ।

व्यास उवाच—"जीवत्-पुत्रि ! अयं धर्म-नित्यः महात्मा पुरुषर्षभः धर्मराट् ते पुत्रः युधिष्ठिरः धर्मेण पृथिवीं जित्वा पृथिव्यां सर्वान् पार्थिवान् प्रशासिष्यति । अखिलां जित्वा भीमसेनार्जुन-बलात् भोक्ष्यते नात्र संशयः । सदा सुमनसः तव पुत्राः माद्र्याः च सर्वे एव महारथाः स्वराष्ट्रे सुखं विहरिष्यन्ति । इमां पृथिवीं च निर्जित्य नर-व्याघ्राः भूरिदक्षिणैः राजसूयाश्वमेधाद्यैः क्रतुभिः यक्ष्यन्ति । ते सुताः भोगैश्वर्य-सुखेन च सुहृद्वर्गं अनुगृह्य इमं पितृपैतामहं च राज्यं भोक्ष्यन्ति ।

वैशम्पायन उवाच-एवम् उक्त्वा तदा ऋषिः द्वैपायनः एतान् ब्राह्मणस्य निवेशने निवेश्य पाण्डव-श्रेष्ठम् अब्रवीत् । इह मासं प्रतीक्षध्वम् अहं पुनः आगमिष्यामि । देश-कालौ विदित्वा एव परमां मुदं लप्स्यध्वम् ।

नराधिप ! स तैः सर्वैः प्राञ्जलिभिः तथा इति उक्तः प्रभुः भगवान् ऋषिः व्यासः यथागतम् जगाम ।

वैशम्पायन उवाच—ते तु महारथाः कुन्तीपुत्राः एक-चक्रां गताः, ते विविधानि रमणीयानि वनानि, पार्थिवान् अपि च, उद्देशान्, सरितः च, सरांसि च पश्यन्तः ते न अतिचिरं कालं ब्राह्मणस्य निवेशने ऊषुः विशाम्पते ! तदा तु ते सर्वे एव भैक्षं चेरुः । नागराणां स्वैः गुणैः प्रिय-दर्शनाः बभूवुः । तदा सदा निशि कुन्त्यै भैक्षं निवेदयन्ति स्म । ते तया विभक्तान् भागान् पृथक् २ भुञ्जते स्म । ते परन्तपाः वीराः मात्रा सह अर्धं भुञ्जते । सर्वस्य भैक्षस्य अर्धं महाबलः भीमः भुङ्क्ते ।

भरतर्षभ ! तस्मिन् राष्ट्रे वसतां तेषां महात्मनाम् अयं सुमहान् कालः अतिचक्राम ।

ततः कतिपयाहस्य प्रतिश्रयार्थी संशितव्रतः ब्राह्मणः ब्राह्मणस्य तद् वेश्म आजगाम ह । तदा स विप्रर्षभः सर्वातिथि-व्रतः तं विप्रं सम्यक् पूजयित्वा तस्मै प्रतिश्रयं ददौ ।

ततस्ते नरर्षभाः सर्वे पाण्डवाः कुन्त्या सह शुभाः कथाः कथयन्तः विप्रम् उपासाञ्चक्रिरे । देशान् च, तीर्थानि च तथा सरितः, राज्ञः, विविधाश्चर्यान् देशान् पुराणि च कथयामास । जनमेजय ! कथान्ते स विप्रः पाञ्चालेषु याज्ञसेन्याः अद्भुताकारं स्वयंवरम् अकथयत् ।

एतत् श्रुत्वा तु कौन्तेयाः शल्यविद्धा इवाभवन् । ते सर्वे महाबलाः अस्वस्थ-मनसो बभूवुः ।

अथ तेषु महात्मसु पाण्डवेषु प्रच्छन्नं वसत्सु तान् द्रष्टुम् सत्यवतीसुतः व्यासः आजगाम । तदा परन्तपाः तम् आगतम् अभिप्रेक्ष्य, प्रत्युद्गम्य, प्रणिपत्य, अभिवाद्य प्राञ्जलयः तस्थुः । तान् सर्वान् आसीनान् समनुज्ञाप्य पार्थैः प्रच्छन्नं पूजितः प्रीति-पूर्वम् इदं वचः अब्रवीत्— "अयि धर्मेण शास्त्रेण वर्तध्वम् ? अयि परन्तपाः ! पूजार्हेषु विप्रेषु वः पूजा न हीयते ? अथ स भगवान् ऋषिः धर्मार्थविद्-विचित्राः च ताः कथाः उक्त्वा पुनर् एव इदम् अब्रवीत्—

महाबलाः ! तस्मात् पाञ्चाल नगरे निवसत*१ । तमनु-प्राप्य सुखिनः भविष्यथ न संशयः । स महाभागः महातपाः पितामहः पाण्डवान् एवम् उक्त्वा पार्थान् कुन्तीञ्च आमन्त्र्य प्रातिष्ठत ।

---

*१ निवसध्वम् इति आर्षः प्रयोगः १७१·१६

ततः ते नर-शार्दूलाः भ्रातरः पञ्च-पाण्डवाः द्रौपदीं तं च महोत्सवं देशम् द्रष्टुम् प्रययुः।

इति श्री महाभारते शतसाहस्र्यां व्यास-दर्शनम्



## स्वयंवरे पाण्डवागमनम्

वैशम्पायन उवाच—ते परन्तपाः नरव्याघ्राः मात्रा सह प्रयाताः। मार्गे बहून् गच्छतः संगतान् ब्राह्मणान् ददृशुः। राजन्! ते ब्राह्मणाः ब्रह्मचारिणः पाण्डवान् ऊचुः—"क्व भवन्तो गमिष्यन्ति! कुतो वा अभ्यागताः इह!"

युधिष्ठिर उवाच—'द्विजर्षभाः। भवन्तः एकचक्रायाः आगतान् सोदर्यान् एकचारिणः मात्रा सह विजानन्तु।"

ब्राह्मणा ऊचुः—"अद्य एव पाञ्चालान् द्रुपदस्य निवेशने गच्छत। सुमहाधनः महान् तत्र स्वयंवरो भविता। वयं तत्रैव गामिनः एक-सार्थ-प्रयाताःस्म। तत्र सुमहोत्सवः हि अद्भुत-संकाशो भविता। स्वयंवर-कृत-क्षणाम् यज्ञसेनस्य सुतां, तं च दिव्यं महोत्सवं द्रष्टुं वै वयं गच्छामः।

राजानः, राजपुत्राः भूरिदक्षिणाः यजमानाः, शुचयः स्वाध्यायवन्तः यतव्रताः महात्मानः नाना-देश-समागताः तरुणाः दर्शनीयाः च कृतास्त्राः महारथाः भूमिपाः समुपैष्यन्ति। ते नरेश्वराः विजयार्थं विविधान् दायान् सर्वशः धनं, गाः, भोज्यं, भक्ष्यं च प्रदास्यन्ति। तत्सर्वं प्रतिगृह्य, स्वयंवरं च एवं दृष्ट्वा उत्सवं चैव अनुभूय यथेप्सितं गमिष्यामः।

तत्र नटाः वैतालिकाः, सूत-मागधाः नर्तकाः महाबलाः नियोधकाः च देशेभ्यः समेष्यन्ति। महात्मानः एवं कौतुहलं कृत्वा, दृष्ट्वा, प्रतिगृह्य च, अस्माभिः सह पुनः प्रतिनिवर्त्स्यथ।

कृष्णा वः सर्वान् दर्शनीयान् देवरूपान् अवस्थितान् समीक्ष्य, संगत्य एकतमं वरं वरयेत्।

अथ तव अयं भ्राता श्रीमान्, दर्शनीयः महाभुजः, विजये नियुज्यमानः, संगत्या बहु द्रविणम् आहरिष्यन् नूनं वः प्रीतिं वर्धयिष्यति।

युधिष्ठिरः उवाच—'भोः! कन्यायाः तं महोत्सवं स्वयंवरं द्रष्टुं भवद्भिः सहिताः सर्वे गमिष्यामः।

जनमेजय! एवमुक्ताः ते पाण्डवाः राज्ञा द्रुपदेन अभिरक्षितान् दक्षिणान् पञ्चालान् प्रयाताः। ततः तदा

वीराः पाण्डवाः महात्मानं शुद्धात्मानं अकल्मषं द्वैपायनं मुनिं ददृशुः ।

तस्मै यथावत् सत्कारं कृत्वा, तेन च सत्कृताः, कथान्ते च अभ्यनुज्ञाताः द्रुपद-क्षयं प्रययुः । महारथाः रमणीयानि वनानि, सरांसि च पश्यन्तः, तत्र, तत्र, वसन्तः च शनैः जग्मुः । स्वाध्यायवन्तः शुचयः, मधुराः प्रिय-वादिनः, पाण्डुनन्दनाः आनुपूर्व्येण पाञ्चालान् संप्राप्ताः ।

तदा ते पाण्डवाः तत्पुरं स्कन्धावारं च दृष्ट्वा कुम्भकारस्य शालायां निवासं चक्रिरे । ब्राह्मणीं वृत्तिम् आश्रिताः तत्र भैक्ष्यं समाजह्रुः । तान् तथा संप्राप्तान् वीरान् न क्वचित् जज्ञिरे ।

इति श्री महाभारते शतसाहस्त्र्यां स्वयंवरे पाण्डवागमनम्

# धृष्टद्युम्न-घोषणा

वैशम्पायन उवाच—"नगरात् प्रागुत्तरेण समे शुभे भूमिभागे सर्वतः भवनैः वृतः समाजवाटः प्राकार-परिखोपेत्तः, द्वार-तोरण-मण्डितः, विचित्रेण वितानेन सर्वतः समलंकृतः, तूर्यौघ-शत-संकीर्णः, परार्घ्यागरु-धूपितः, चन्दनोदक-सिक्तः, माल्य-दामोपभशोभितः, नभस्तलविलेखिभिः कैलास-शिखर-प्रख्यैः सुकृतोच्छ्रयैः शुभ्रैः प्रासादैः सर्वतः संवृतः, मणि-कुट्टिम-भूषितैः सुखा-रोहण-सोपानैः, सुवर्ण जाल-संवीतैः, महासनपरिच्छदैः, स्रग्दाम-समवच्छन्नैः आयोजन-सुगन्धिभिः अगरूत्तम-वासितैः, बहुभिः हंसांशुवर्णैः, शयनासन-शोभितैः, बहु-धातु पिनद्धाङ्गैः, हिमवच्छिखरैः इव असम्बाध-शत-द्वारैः शुशुभे ।

तदा नाना प्रकारेषु-विमानेषु, स्वलंकृताः अन्योऽन्यं स्पर्धमानाः सर्व-पार्थिवाः तत्र निषेदुः । महा-सत्व पराक्रमान्, महाभागान्, कृष्णागुरु-भूपितान्, महाप्रसादान्, ब्रह्मण्यान्, स्व-राष्ट्र-परिरक्षिणः, सुकृतैः शुभैः कर्मभिः सर्वस्य लोकस्य प्रियान् तत्रोपविष्टान् राजसिंहान् ददृशुः ।

परार्घ्येषु मञ्चेषु च पौरजानपदाः जनाः कृष्णादर्शन-सिद्ध्यार्थं सर्वतः उपाविशन् । पाञ्चालराजस्य अनु-

च्चमाम् ऋद्धिं पश्यन्तः ते पाण्डवाः ब्राह्मणैः सहिताः समुपाविशन् ।

राजन् ! रत्न-प्रदान-बहुलः, नट-नर्तकैः शोभितः सः समाजः बहून् दिवसान् ववृधे। भरतर्षभ ! ततः समाजे वर्तमाने तु षोडशे अह्नि रमणीये आप्लुतांगी, सुवस्त्रा, सर्वाभरण-भूषिता द्रौपदी काञ्चनीं समलंकृतां मालामुपादाय रङ्गम् अवतीर्णा ।

तदा सोमकानां पुरोहितः, मंत्रवित्, शुचिः ब्राह्मणः, परिस्तीर्य विधिवत् अग्निम् आज्येन जुहाव। ज्वलनं सन्तर्पयित्वा, ब्राह्मणान् च स्वस्तिवाच्य समन्ततः सर्वाणि वादित्राणि वारयामास ।

विशाम्पते ! तस्मिन् निः-शब्दे कृते धृष्ट-द्युम्नः विधिवत् कृष्णाम् आदाय, रंग-मध्ये गतः, मेघ-दुन्दुभि-निश्वनः तत्र मेघ-गम्भीरया गिरा इदम् अर्थवत् श्लक्ष्ण वाक्यम् उच्चैः जगाद—समेताः भूपतयः मे शृण्वन्तु—'इदं धनुर्लक्ष्यम्, इमेच बाणाः; दशार्धैः व्योमचरैः शितैः शरैः यन्त्रस्य छिद्रेण समर्पयध्वम् ।

एतन्महत्कर्म करोति यो वै कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं कृष्णा भवित्री न मृषा ब्रवीमि ।।

आ० प० १८७।१७

द्रुपदस्य पुत्रः तान् एवमुक्त्वा, तां भगिनीम् पश्चाद् समेतान् भूमि-पतीन् नाम्ना च, गोत्रेण च, कर्मणा च संकीर्तयन् इदम् उवाच—"दुर्योधनो, दुर्विषहः, दुर्मुखः, दुष्प्रधर्षणः, विविंशतिः, विकर्णः, सहः, तथा दुःशासनः, युयुत्सुः, वायुवेगः, भीमवेगवरः उग्रायुधः, बलाकी, कर्कायुः, विरोचनः, कुण्डकः, चित्रसेनः, सुवर्चाः, कनकध्वजः, नन्दकः, बाहुशाली, तुहुण्डः, त्रिकटः, एते अन्ये च महाबलाः वीराः धार्तराष्ट्राः कर्णेन सहिताः त्वदर्थं समुपागताः।

सौबलः शकुनिः वृषकः अथ बृहद्-बलः एते सर्वे गान्धार-राजस्य सुताः समागताः। सर्व शास्त्र-भृतां वरौ अश्वत्थामा च भोजः च महात्मानौ समलङ्कृतौ त्वदर्थे समवेतौ।

बृहन्तः, मणिमान्, पार्थिवः दण्डधारः, सहदेव-जयत्सेनौ, पार्थिवः मेघसन्धिः, शङ्खेन उत्तरेण च पुत्राभ्यां सह विराटः, वार्धक्षेमिः, सुशर्मा, पार्थिवः सेनाबिन्दुः, सुनाम्ना सुवर्चसा च पुत्रेण सह सुकेतुः, सुचित्रः, सुकुमारः, वृकः, सत्य-धृतिः, सूर्यध्वजः, रोचमानः, नीलः, चित्रायुधः, अंशुमान्, चेकितानः, महाबलः श्रेणिमान् समुद्रसेन-पुत्रः प्रतापवान् चन्द्रसेनः, जलसन्धः, विदण्डः दण्ड एव पिता-पुत्रौ, पौण्ड्रको वासुदेवः, वीर्यवान

भगदत्तः, कलिंगः, ताम्रलिप्तः, पत्तनाधिपतिः महारथः शल्यः मद्रराजः सपुत्रः, रुक्माङ्गदेन, वीरेण रुक्मरथेन, च (सहितः) कौरव्यः सोमदत्तः, अस्य च महारथः पुत्रः; भूरिः, भूरिश्रवाः, शलः, त्रयः च शूराः समवेताः।

कम्बोजः सुदक्षिणः, पौरवः च दृढधन्वा, बृहद्बलः, सुषेणः, औशीनरः शिबिः, पटच्चरनिहन्ता, कारुषाधिपतिः, संकर्षणः, वासुदेवः, वीर्यवान् रौक्मिणेयः, साम्बः, चारुदेष्णः, प्राद्युम्निः सगदः, अक्रूरः, सात्यकिः, महामतिः उद्धवः, कृतवर्मा, हार्दिक्यः, पृथुः, विपृथुः, विदूरथः, कंकः, सगवेषणः शंकु, आशावहः, अनिरुद्धः, समीकः सारिमेजयः, वीरः वातपतिः, झिल्ली-पिंडारकः, विक्रान्तः उशीनरः, ते वृष्णयः प्रकीर्तिताः।

भागीरथः, बृहत्क्षत्रः, सैन्धवः जयद्रथः, बृहद्रथः, बाह्लिकः, महारथः श्रुतायुः, उलूकः, राजा कैतवः, चित्राङ्गशुभाङ्गदौ, मतिमान् वत्सराजः, कोसलाधिपतिः, विक्रान्तः शिशुपालः, जरा- सन्धः, एते अन्ये च बहवो जनपदेश्वराः, भुवि-प्रथिताः क्षत्रियाः भद्रे त्वदर्थमागताः।

एते विक्रान्ताः त्वदर्थे उत्तमं लक्ष्यं भेत्स्यन्ति। य इदं लक्ष्यं विध्येत, शुभे! तम् अद्य वरयेथाः।

इति श्री महाभारते शतसाहस्र्यां धृष्टद्युम्न-घोषणा।

# लक्ष्यछेदनम्

वैशम्पायन उवाच—ते परस्परं स्पर्धमानाः अलं-कृताः कुण्डलिनः, युवानः नरेन्द्राः आत्मनि अस्त्रं बलं च मन्यमानाः उद्गायुधाः सर्वे रूपेण, वीर्येण. कुलेन, शीलेन, वित्तेन, यौवनेन चैव समिद्ध-दर्पाः समुत्पेतुः यथा मत्ताः मद-वेगाभिन्ना हैमवताः गजेन्द्राः । परस्परं स्पर्धया प्रेक्षमाणाः, संकल्पेन अभि-परिप्लुताङ्गाः, कृष्णा ममैव इति अभिभाषमाणाः सहसा नृपासनेभ्यः उदतिष्ठन् ।

तां द्रुपदात्मजां जिगीषमाणाः, ते रंगगताः समेताः क्षत्रियाः चकाशिरे यथा पर्वतराज-कन्याम् उमां ( जिगी-षमाणाः ) समेताः देवगणाः । तत्र कन्दर्पबाणाभिनिपी-डिताङ्गाः ते नरेन्द्राः कृष्णागतैः हृदयैः द्रुपदात्मजार्थं रङ्गावतीर्णाः सुहृदो अपि द्वेषं प्रचक्रुः ।

हलायुधः, जनार्दनः, च, महान्तः वृष्ण्यन्धकाः यदुपुङ्गवः च यथा-प्रधानं कृष्णस्य मते स्थिताः ते स्म प्रेक्षांचक्रुः । यदुवीर-मुख्यः कृष्णः अभिपद्मान् मत्तगजेन्द्र-रूपान् पञ्च वारणेन्द्रान् भस्मावृताङ्गान् हव्य वाहनान् इव दृष्ट्वा प्रदध्यौ ।

स युधिष्ठिरं, भीमं, सजिष्णुं, यमौ च वीरौ रामाय शशंस । रामः शनैः शनैः तान् प्रसमीक्ष्य प्रीतमना जना-

र्दनं ददर्श। अन्ये वीराः नृप-पुत्र-पौत्राः कृष्णा-गतैः नेत्र-मनः-स्वभावैः संदष्ट-दन्तच्छद-ताम्रनेत्राः व्यायच्छ-मानाः तान् वै न ददृशुः।

ततः ते सकर्ण-दुर्योधन-शाल्व-शल्य-द्रौणायानि-क्राथ-सुनीथ-वक्राः राजगणाः, कलिंग-वंगाधिप-पाण्ड्य पौण्ड्राः विदेह-राजः, यवनाधिपः, अन्ये च नाना-नृप-पुत्र-पौत्राः-पङ्कलपत्र-नेत्राः राष्ट्राधिपाः, किरीट-हाराङ्गद चक्रवालैः विभूषिताङ्गाः विक्रम-सत्व-युक्ताः,-अनुक्रमं बलेन वीर्येण च नर्दमानाः क्रमेण कृष्णा-निमित्तं कृत-विक्रमाः संहननो-पपन्नं तत् कार्मुकं मनसा अपि सज्यं कर्तुं न शेकुः। ते नरेन्द्राः विक्रमन्तः स्फुरिताधरोष्ठाः, धनुषा विक्षिप्यमानाः शैक्ष्य-गुण-क्रमात् धरणी-तलस्थाः यथाबलं विचेष्टमाणाः स्रस्त-किरीट-हाराः गतौजसः वि-निःश्वसन्तः शमयां बभूवुः। तदा दृढेन तद्धनुषा विस्रस्त-हारांगद--चक्रवालं कृष्णा-निमित्तं विनिवृत्तकामं राज्ञां मण्डलम् हाहाकृतम् आर्तम् आसीत्। तान् सर्वान् नृपान् प्रसमीक्ष्य धनुर्धराणां प्रवरः कर्णो जगाम, तूर्णं उद्धृत्य, तत् उद्यतं धनुः सज्यं चकार, आशु युयोज बाणान्। अथ धनुर्धराः पाण्डुपुत्राः रागकृत-प्रति

अत्यग्नि-सोमार्कम्, अर्कपुत्रं सूतं दृष्ट्वा लक्ष्यवरं भित्त्वा धरायां नीतं मेनिरे।

द्रौपदी तं तु दृष्ट्वा उच्चैः वाक्यं जगाद—"न अहं वरयामि सूतम् ।"

कर्णः सामर्ष-हासं सूर्यं प्रसमीक्ष्य तत् स्फुरितं धनुः तत्याज।

एवं समन्ततः तेषु क्षत्रियेषु निवृत्तेषु, बलवान्, अन्तकोपमः, वीरः, चेदीनाम् अधिपः, दमघोष-सुतः, धीरः, महामतिः शिशुपालः धनुः आददानः *१ जानुभ्याम् महीम् अगमत्।

ततः महावीर्यः, महाबलः, राजा जरासन्धः धनुषः अभ्यासम् आगत्य अचलः गिरिः इव तस्थौ। धनुषा पीड्यमानः जानुभ्यां महीं गतः। ततः उत्थाय स राजा स्व-राष्ट्राणि अभिजगाम* २। ततो महावीर्यः, महाबलः मद्र-राजः शल्यः अपि तत् आरोपयमानः * ३जानुभ्यां महीम् अगमत्।

वैशम्पायन उवाच—यदा सज्य-कर्मणः धनुषः राजानः निवृत्ताः, अथ विप्राणां मध्यात् उदारधिः जिष्णुः उदतिष्ठत्।

*१ आदायमानः इत्यार्षः प्रयोगः १८६।२५

*२ अभिजग्मिवान् इति छन्दसः प्रयोगः १६६।२६

*३ आरोप्यमाणः इति आर्षप्रयोगः १८६।२८

विप्र-मुख्या इन्द्र-केतु-समप्रभं पार्थं संप्रस्थितं दृष्ट्वा अजिनानि विधुन्वन्तः उदक्रोशन् ! केचित् बुद्धि-जीविनः विमनसः आसन्, केचित् मुदान्विताः-आसन्, केचित् निपुणाः परस्परम् आहुः । 'द्विजाः ! यद् धनुः कर्ण-शल्य-प्रमुखैः लोक-विश्रुतैः बलवद्भिः धनुर्वेदपरायणैः क्षत्रियैः न आनतम्, तत् धनुः कथंतु अकृतास्त्रेण प्राणतो दुर्बलीयसा बटु-मात्रेण सज्यं हि कर्तुं शक्यम् । चापलाद् अपरीक्षिते अस्मिन् कर्मणि असंसिद्धे सर्व-राजसु ब्राह्मणाः अवहास्याः भविष्यन्ति यदि एष दर्पात् ,हर्षात्, अथापि वा ब्राह्मण-चापलात् धनुर् आयन्तुं प्रस्थितः वार्यताम् साधु मा गमत् ।

ब्राह्मणाः ऊचुः—न अवहास्या भविष्यामः, न च लाघवम् आस्थिताः, न च लोके महीक्षिताम् विद्विष्टतां गमिष्यामः । केचित् आहुः—श्रीमान् युवा नाग-राज-करोपमः, पीनस्कन्धोरुबाहुः च धैर्येण च हिमवान् इव । सिंह-खेल-गतिः, मत्त-नागेन्द्र-विक्रमः । उत्साहात् च अनुमीयते अस्मिन् इदं कर्म अनुमीयते । महोत्साहः ! अस्य शक्तिः न हि अशक्तः स्वयं व्रजेत् ।

न च तद्-विद्यते किंचित् कर्म लोकेषु यद् भवेत् ।
ब्राह्मणानाम् असाध्यं च नृषु संस्थान-चारिषु ॥
अब्भक्षाः वायु-भक्षाश्च फलाहाराः दृढव्रताः ।

दुर्बलाः अपि विप्राः हि बलीयांसः स्वतेजसा ॥
ब्राह्मणो नावमन्तव्यः सदसद्वा समाचरन् ।
सुखं दुःखं महद् ह्रस्वं कर्म यत्समुपागतम् ॥
रामेण जामदग्न्येन युधि क्षत्रियाः निर्जिताः ।
तस्मात् सर्वे ऽत्र ब्रुवन्तु एष महान् बटुः ॥
शीघ्रं वै धनुः आरोपयतु द्विजर्षभाः था इति ऊचुः ।

आ० प० १६० । ११-१३

एवं तेषां विप्राणां विविधाः गिरः विलपताम्, अर्जुनः धनुषो ऽभ्याशे अचलः गिरिः इव तस्थौ । अथ सः तद् धनुः परिक्रम्य प्रदक्षिणम् अकरोत् । देवम् ईशानं वरदं प्रभुं शिरसा प्रणम्य वीर्यवतां सदर्पः ऐन्द्रिः, इन्द्रावरज-प्रभावः अर्जुनः—तदा धनुर्वेद-परैः नृसिंहैः पार्थिवैः रुक्म-सुनीथ-वक्र-राधेय-दुर्योधन-शल्य-शाल्वैः महतो ऽपि यत्नात् यद् धनुः सज्यं न कृतं—तत् निमिषान्तरेण सज्यं चक्रे, शरार्थसंख्यान् शरान् च जग्राह, छिद्रेण लक्ष्यं विव्याध, अति-विद्धं सहसा भूमौ निपपात । अत्र समन्तात् नभसः पुष्पवृष्टयः न्यपतन्, वादकाः शताङ्गानि तूर्याणि समवादयन् । तत्र सहस्रशः ब्राह्मणाः चैलानि विव्यधुः । सूत-मागध-संघाः च अपि तत्र सु-स्वराः अस्तुवन् । सः रिपु-सूदनः द्रुपदः तं

दृष्ट्वा प्रीतो बभूव ! सैन्यैः च सह पार्थिवस्य साहाय्यार्थम् इयेष ।

तस्मिन् तु महति शब्दे प्रवृद्धे धर्मभृतां वरिष्ठो युधिष्ठिरः पुरुषोत्तमाभ्यां यमाभ्यां सार्धं शीघ्रम् आवासमेव उपजगाम ।

कृष्णा च लक्ष्यं विद्धं प्रसमीक्ष्य, पार्थं च शक्रप्रतिमं निरीक्ष्य, शुक्लाम्बरमाल्यदाम आदाय उत्स्मयन्ती कुन्तीसुतं जगाम । स ताम् उपाहाय, रङ्गे विजित्य, तैः द्विजातिभिः अभि-पूज्यमानः तथा च पत्न्या अनुगम्यमानः अचिन्त्यकर्मा निराक्रामत् । तदा तस्मै ब्राह्मणाय कन्यांदित्सति नृपे महीपानाम् अन्यो अन्यम् अन्तिकाद् आलोक्य कोप आसीत् । अयम् अस्मान् अतिक्रम्य, संगतान् च तृणीकृत्य योषितां वरां द्रौपदीं विप्राय दातुम् इच्छति ।

'अवरोप्येह वृक्षं तु फलकालेनिपात्यते' एनं दुरात्मानं निहन्म, यो अस्मान् न मन्यते । एष न सम्मानं न गुणैः वृद्ध-क्रमम् अपि अर्हति । एनं नृप-द्विषं दुराचारं पुत्रेण सह हन्म । अहं सर्वान् नराधिपान् उत्कृत्य, आहूय, गुणवद् अन्नम् भोजयित्वा, ततः पश्चात् न मन्यते । देवानाम् इव सन्नये, अस्मिन् राजसमवाये किम् अयं कंचित्

नृपतिं सदृशं नैव दृष्टवान् । न च विप्रेषु वरणं प्रति अधिकारो विद्यते । स्वयंवरः क्षत्रियाणाम् इति इयं श्रुतिः प्रथिता ।

पार्थिवाः ! अथवा यदि इयं कन्या कञ्चित् न बुभूषति, अग्नौ एनां प्रक्षिप्य राष्ट्राणि याम ।

यदि ब्राह्मण-चापल्यात्, लोभाद् वा इदं पार्थिवेन्द्राणां विप्रियं कृतवान्, नैष कथञ्चन वध्यः ।

ब्राह्मणार्थं हि नो राज्यं, जीवितं हि वसूनि च ।
पुत्रं पौत्रं यच्चान्यदस्माकं विद्यते धनम् ॥

आ० प० १६१।१०

अवमान-भयात्, स्वधर्मस्य चैव रक्षणात् (एवं ब्रूमः) अन्येषाम् स्वयंवराणाम् एवं विधा गतिःमा भूत् ।'

इति उक्त्वा परिघ-बाहवः हृष्टाः राजशार्दूलाः द्रुपदं जिघांसन्तः सायुधाः समुपाद्रवन् ।

तान् बहून् क्रुद्धान् गृहीत-शरावापान् आपततः वीक्ष्य द्रुपदः संत्रासाद् ब्राह्मणान् शरणं गतः । प्रभिन्नान् इव वारणान्, वेगेन आपततः तान् तु महेष्वासौ अरिन्दमौ पाण्डु-पुत्रौ प्रतियातौ । ततः अर्जुन-भीम-

सेनौ कुरुराजपुत्रौ अवर्धयन्त: जिघांसमानाः ते महीक्षितः बद्ध-तलांगुलित्रा उदायुधाः समुत्पेतुः। ततः वज्र-समानसारः महाबलः अद्भुत-भीम-कर्मा भीमः एकवीरः दोर्भ्यां द्रुमम् उत्पाट्य निष्पत्रतयामास यथा गजेन्द्रः। रिपु-प्रमाथी दण्डी पितृ-राज इव उग्रं दण्डं तं वृक्षम् आदाय पुरुषर्षभस्य पार्थस्य समीपे पृथु-दीर्घ-बाहुः पार्थः तस्थौ। स अचिन्त्य-कर्मा, अति-मनुष्य-बुद्धिः जिष्णुः तत्कर्म प्रेक्ष्य विसिष्मिये, भयं च विहाय, महेन्द्रकर्मा धनुः गृहीत्वा * तस्थौ।

सहः-भ्रातुः जिष्णोः तत्कर्म प्रेक्ष्य अति-मनुष्य-बुद्धिः अचिन्त्य-कर्मा दामोदरः उग्रवीर्यं भ्रातरं हलायुधम् इदं वाक्यं बभाषे—"य एषः सिंहर्षभ-खेल-गामी तालमात्रं महद् धनुः कर्षति, एषो अर्जुनः, अत्र विचार्यं न अस्ति, संकर्षण! यदि वासुदेवः अस्मि। यः तु एष तरसा वृक्षम् अवभज्य राज्ञां निकारे सहसा प्रवृत्तः, इह पृथिव्याम् एतत् समरे कर्तुं वृकोदरात् न अन्यः समर्थो। यः असौ तनुः, कमलायताक्षः, सिंहगतिः विनीतः

* गृह्य इति आर्षः प्रयोगः १६।१।१८

प्रलम्बोज्ज्वल-चारुघोणः, गौरः विनिःसृतः सः अच्युत-धर्मपुत्रः। यौ कार्तिकेयौ कुमारौ इव तौ द्वौ आश्विनेयौ इति मे वितर्कः तस्मात् जतु-वेश्म-दाहात् पाण्डुसुताः पृथा च मुक्ताः मया श्रुताः।

अनन्तरजं प्रतीतः हलायुधः निर्जल-तोयदाभः तम् अब्रवीत्—"कौरवाग्र्यैः सह विमुक्तां पितृष्वसारं पृथां दृष्ट्वा प्रीतो अस्मि।

इति श्री महाभारते शतसहस्र्यां लक्ष्यच्छेदनम्।

## पाण्डव-प्रत्यागमनम्

वैशम्पायन उवाच—अजिनानि करकान् च विधुन्वन्तः ते द्विजर्षभाः ऊचुः—"भीः न कर्तव्या, वयं परान् योत्स्यामहे ।"

अर्जुनः प्रहसन्निव एवं वदतः तान् विप्रान् उवाच—"प्रेक्षकाः भूत्वा यूयं पार्श्वतः तिष्ठत । अहम् एनान् संक्रुद्धान् आशीविषान् मन्त्रैः इव, जिह्माग्रान् *१ शतशः शरान् *१ विकरन् वारयिष्यामि ।" इति महाबलः शुल्कावाप्तं तद् धनुः आनम्य भ्रात्रा भीमेन सहितः अचलः गिरिः इव तस्थौ ।

ततः युद्ध-दुर्मदान् कर्ण-मुखान् दृष्ट्वा तौ अभीतौ संपेततुः गजौ प्रति गजान् इव । ते युयुत्सवो राजानः परुषाः वाचः ऊचुः—"आहवे हि युयुत्सतः द्विजस्य अपि वधः दृष्टः ।" इति एवम् उक्त्वा राजानः सहसा द्विजान् दुद्रुवुः । ततः महातेजाः कर्णः रणे जिष्णुं प्रति ययौ, मद्राणाम् ईश्वरः बली शल्यः भीमसेनं ययौ, यथा वासिता हेतोः गजं प्रति युद्धार्थी गजः । दुर्योधनादयः सर्वे ब्राह्मणैः सह संगताः । तदा मृदु-पूर्वम् अयत्नेन आहवे प्रत्ययुध्यन् ।

*१ जिह्माग्रैः शरैः इत्यार्षः प्रयोगः १९२।३

ततः श्रीमान् अर्जुनः बलवद् धनुः विकृष्य शितैः शरैः आपतन्तं वैकर्तनं कर्णं प्रत्यविध्यत्। तेषां तिग्म तेजसां शराणां वेगेन निसृज्यमानो राधेयः यत्नात् तम् अनुधावति।

तौ उभौ जयतां वरौ सुसंरब्धौ अन्योऽन्य-विजिगीषिणौ अत्यनिर्देश्यौ लाघवात् अयुध्येताम्। कृते प्रतिकृतं पश्य, मे च बाहुबलं पश्य इति परस्परं शूरार्थ-वचनैः अभाषेताम्। ततो भुवि अर्जुनस्य वीर्यम् अप्रतिमम् ज्ञात्वा वैकर्तनः कर्णः संरब्धः समयोधयत्। तदा अर्जुनेन प्रयुक्तान् वेगवतः तान् बाणान् प्रतिहत्य उच्चैः ननाद। सैन्यानि तत् अपूजयन्।

कर्ण उवाच—"विप्रमुख्य! भुजवीर्यस्य संयुगे, अस्य चैव अविषादस्य, शास्त्रास्त्रस्य च विजयस्य ते तुष्यामि। त्वं किं साक्षात् धनुर्वेदः? विप्रसत्तम! रामो वा। अथ साक्षात् हरिहयः। साक्षात् वा विष्णुः अच्युतः आत्म-प्रच्छादनार्थं वा बाहुवीर्यम् उपाश्रितः, इदं विप्र-रूपं विधाय, मन्ये, मां प्रति युध्यसे। आहवे माम् क्रुद्धं साक्षात् शचीपतेः, किरीटिनः पाण्डवाद् वा अन्यः पुमान् योधयितुं न शक्तः।

तम् एवं वादिनं फाल्गुनः तत्र प्रत्यभाषत—' कर्ण! न धनुर्वेदः अस्मि, न प्रतापवान् रामः अस्मि, युधां श्रेष्ठः

सर्वास्त्रभृतांवरः गुरु-शासनात् च पौरन्दरे अस्त्रे निष्ठितः ब्राह्मणः अस्मि। त्वाम् अद्य रणे जेतुं स्थितोऽस्मि। वीर! स्थिरो भव।"

वैशम्पायन उवाच—एवम् उक्तः महारथः राधेयः कर्णः तदा ब्राह्मं तेजः अजय्यं मन्यमानः युद्धात् न्यवर्तत।

अपरस्मिन् वनोद्देशे वीरौ शल्य-वृकोदरौ विद्यायाः बलेन च बलिनौ युद्धसम्पन्नौ मत्तौ गजौ इव अन्योऽन्यम् आह्वयन्तौ मुष्टिभिः, जानुभिः चैव इतरेतरम् विनिघ्नन्तौ, प्रकर्षणा-कर्षणयोः अभ्याकर्ष-विकर्षणैः अन्योऽन्यम् आचकर्षतुः। मुष्टिभिः च अपि जघ्नतुः। ततः तयोः सुघोरः चटचटा-शब्दः हि अभवत्। तदा तौ मुहूर्तं पाषाण-संपात-निभैः प्रहारैः अभिजघ्नतुः। तदा अन्योऽन्यं समरे पर्यकर्षताम्। ततः कुरु-श्रेष्ठः भीमः आहवे शल्यं बाहुभ्यां समुत्क्षिप्य अपातयत्, ततः ब्राह्मणाः जहसुः। तत्र पुरुषर्षभः भीमसेनः आश्चर्यं चकार, यत् भूमौ पातितं बलिनं शल्यं बली न अवधीत्।

भीमसेनेन शल्ये पातिते, कर्णे च शङ्किते शंकिताः सर्व-राजानः वृकोदरं परिवव्रुः। तत्र सहिताः ऊचुः—'साधु इमौ ब्राह्मणर्षभौ, विज्ञायेताम् क्व जन्मानौ, तथैव च क्व-निवासौ?

अस्मात् ब्राह्मण-संवृतात् युद्धात् अवहारः क्रियतां, सापराधा अपि नित्यदा ब्राह्मणाः सदा रक्ष्याः, अथ एतान् इह उपलभ्य हृष्टवत् पुनः योत्स्यामः।

कृष्णः भीमस्य तत्कर्म प्रसमीक्ष्य तौ कुन्ती-सुतौ परिशङ्कमानः तान् सर्वान् महीपतीन् 'धर्मेण लब्धा' इति अनुनीय निवारयामास।

ते सर्वे विस्मिताः राज-सत्तमाः युद्धविशारदाः युद्धात् विनिवृत्ताः यथावासं ययुः। ये तत्र समागताः आसन्, (ते) रङ्गः ब्रह्मोत्तरो वृतः, पाञ्चाली ब्राह्मणैः वृताः' इति ब्रुवन्तः प्रययुः।

रौरवाजिनवासिभिः ब्राह्मणैः प्रतिच्छन्नौ तौ भीमसेन-धनञ्जयौ कृच्छ्रेण जग्मतुः। जन-संबाधात् विमुक्तौ, शत्रुभिः परिविक्षतौ, तत्र कृष्णया अनुगतौ तौ नृवीरौ पौर्णमास्यां घनैः मुक्तौ उदितौ चन्द्र-सूर्यौ इव विरेजतुः।

अथ महति अपराह्णे घनैः सूर्य इव ब्राह्मणैः आवृतः जिष्णुः तत् भार्गव-वेश्म प्राविशत्।

इति श्री महाभारते शतसाहस्र्यां पाण्डव प्रत्यागमनम्।

## रामकृष्णागमनम्

वैशम्पायन उवाच—वृष्णि-प्रवीरः तु कुरुप्रवीरम् आशंसमानः सह रौहिणेयः तां भार्गव-कर्म-शालां जगाम। यत्र ते पुरुषवीराः आसते। सहरौहिणेयः कृष्णः तत्र उपविष्टं पृथु-दीर्घ-बाहुं अजात-शत्रुं परिवार्य उपोपविष्टान् तान् ज्वलन्-प्रकाशान् ददर्श। ततः वासुदेवः धर्म-भृतां वरिष्ठं कुन्ती-सुतम् अभिगम्य अजमीढ़स्य राज्ञः युधिष्ठिरस्य पादौ निपीड्य अब्रवीत्—'कृष्णो अहम् इति।" रौहिणेयः अपि तस्य अनु तथैव। हृष्टाः च कुरवः तौ अपि अभ्यनन्दन्। भारत मुख्य! यदुप्रवीरौ पितृष्वसुः च अपि पादौ अगृह्णताम्।

अजात-शत्रुः कुरुप्रवीरः कृष्णं विलोक्य कुशलं पप्रच्छ।

"वासुदेव! वयं सर्वे इह गूढा वसन्तः त्वया कथं विदिताः?"

वासुदेवः तम् प्रहस्य अब्रवीद्—"राजन्! गूढोऽप्यग्निः ज्ञायत एव। पाण्डवान् अतीत्य मानवेषुः अन्यः कः तस्य विक्रमस्य * कर्ता विद्यते? दिष्ट्या यूयं सर्वे शत्रुसहाः पाण्डवाः घोरात् पावकाद् विप्रमुक्ताः! दिष्ट्या [illegible] त्यः पापः धृतराष्ट्रस्य पुत्रः सकामो न अभविष्यत्!

*१ तंविक्रमम् इत्यार्षः विभक्ति-प्रयोगः। १६४।२३

वः भद्रम् अस्तु! गुहायां निहितं ज्वलनाः इव विवर्धध्वम्। केचिद् एव पार्थिवाः वो मा विद्युः, तावत् शिबिराय यास्यावः * २।

स अव्ययश्रीः पाण्डवेन अनुज्ञातः, बलदेवेन सार्धं शीघ्रं प्रायात्।

इति श्री महाभारते शतसाहस्र्यां रामकृष्णागमनम्



* २ यास्यावहे इत्यार्षः प्रयोगः १६४-२५

# धृष्ट-द्युम्न प्रत्यागमनम्

वैशम्पायन उवाच—तदा भार्गवस्य निवेशने यान्तौ कुरुनन्दनौ पाञ्चाल्याः पृष्ठतः धृष्टद्युम्नः अन्वगच्छत् । सः समन्ततः पुरुषान् अवधाय अज्ञायमानः भार्गवस्य निवेशने आरात् निलीनो अभूत् ।

सायं च रिपु-प्रमाथी भीमः, जिष्णुः, महानुभावौ च यमौ, अदीनसत्वा भैक्षं चरित्वा युधिष्ठिराय निवेदयांचक्रुः ।

ततः वदान्या कुन्ती तां द्रुपदात्मजाम् काले वचनम् उवाच—"भद्रे ! त्वम् अग्रम् आदाय बलिं कुरुष्व । विप्राय च भिक्षां देहि । परितः परिश्रिताः ये मनुष्याः, ये च अन्नम् इच्छन्ति, तेभ्यः ददस्व । ततश्च शीघ्रम् अर्धं विभज्य, शेषं चतुर्धा, मम, आत्मनः च (कुरुष्व) । भद्रे ! अर्धं तु भीमाय देहि ! यः एषः नागर्षभ-तुल्य-रूपः, गौरो युवा संहननोपपन्नः एषः हि वीरः सदैव बहुभुक् ।

तस्या वचः साधु विशंकमानाः साध्वी साहृष्टरूपा इव राजपुत्री यथावद् उक्तं प्रचकार । ते च अपि सर्वे तद् अन्नं बुभुजुः ।

माद्री-पुत्रः तरस्वी सहदेवः भूमौः कुशैः शयनं चकार । यथा सर्वे वीराः स्वकीयानि अजिनानि संस्तीर्य

धरण्यां सुषुपुः। तेषां कुरुसत्तमानां शिरांसि अगस्त्य-शास्तां दिशम् अभितः (बभूवुः) तेषां पुरस्तात् तु कुन्ती बभूव, पादान्तरे च कृष्णा बभूव। पाण्डुपुत्रैः सह भूमौ कुशेषु पादोपधानी इव कृता अशेत। तस्याः मनसा अपि दुखं न। न च तान् कुरुपुङ्गवान् अवमेने।

ते शूराः तत्र पृतनाधिकाराः विचित्राः कथाः, दिव्यानि अस्त्राणि रथान्, नागान्, खड्गान् परश्वधान् चापि, गदाः च कथयाम्बभूवुः।

राजपुत्रो धृष्टद्युम्नः रात्रौ तेषां कथितं चैव सर्वं वृत्तम् अखिलेन निवेदयिष्यन् त्वरितः जगाम।

महात्मा पाञ्चाल-राजः तु विषण्णरूपः तान् पाण्डवान् अप्रतिविन्दमानः धृष्टद्युम्नं पर्यपृच्छत्—'क्व सा कृष्णा गता, केन च नीता! कच्चिद् न शूद्रेण, न हीनजेन, न वैश्येन वा करदेन उपपन्ना! कच्चित् पङ्क-दिग्धं पदं मूर्धनि न? कच्चित् माला श्मशाने न पतिता! कच्चित् स मनुष्यः वर्ण-प्रवरः! उत अपि कच्चित् उद्रिक्त-वर्ण एव! पुत्र! कच्चित् अद्य कृष्णाभिमिर्शेण वामः पादः मम मूर्धनि कृतः! कच्चित् परम-प्रीतः नरर्षभेण पार्थेन संयुज्य न तप्स्ये। महानुभावः तत्त्वेन वद * १। कोसौ

* १ वदस्व इत्यार्षः प्रयोगः १६४। १७

विजेता मम अद्य ? कच्चित् कुरु-प्रवीरस्य विचित्र-वीर्यस्य सुतस्य पुत्राः म्रियन्ते * २। कच्चित् अद्य यवीयसा पार्थेन धनुः गृहीतं, लक्ष्यं च निहितम्।"

अथ ततः तथोक्तः सः राजपुत्रः परिहृष्ट-रूपः सोमकनां प्रवर्हो धृष्ट-द्युम्नः पित्रे यथा वृत्तं, येन च कृष्णाहृता-शशंस—"नरेन्द्र! मिषतां पार्थिवानां विभ्राजमानौ चन्द्र-सूर्यौ इव तौ नराग्र्यौ कृष्णाम् उपादाय, पुराद् बाह्यां भार्गव-कर्म-शालां गतौ। तत्र तथा-विधैः एव अग्नि-कल्पैः त्रिभिः नरप्रवीरैः उपविष्टैः (लक्षिता) अनलस्य अर्चिः इव उपविष्टा तेषां जनित्री इति मम प्रतर्कः।

ततः तौ तस्याः पादौ अभिवाद्य, कृष्णा तु उक्ता अभिवादय इति। तत्रैव स्थितां च कृष्णां निवेद्य नराग्र्याः च भिक्षा-प्रचाराय गताः।

कृष्णा तेषां तु भैक्ष्यं प्रतिगृह्य बलिं दत्त्वा ब्राह्मण-सात् च कृत्वा तां चैव वृद्धां तान् च नरप्रवीरान् परिवेष्य, स्वयम् अपि अभुक्त। पार्थिव! ते सर्वे एव पृथिव्यां सुप्तः कृष्णा च तेषां चरणोपधाने। तेषां शयनं च दर्भाजिनाग्र्यास्तरणोपपन्नम् आसीत्। ते काल-मेघा इव

* २ म्रियन्ति इत्यार्षः प्रयोगः १८४।

नर्दमाना विचित्राः, कथाः कथयाम्बभूवुः । वीराः ताः वैश्य-शूद्रोपयिकीः न च द्विजानां कथयन्ति । राजन् ! ते निःसंशयं क्षत्रिय-पुङ्गवाः, यथा हि युद्धं कथयन्ति । व्यक्तम् इयं नः आशा समृद्धा, अग्निदाहात् मुक्तान् हि पार्थान् शृणुमः ।

यथा हि तेन प्रसह्य लक्ष्यं निहितं धनुः च सज्यं कृतं, यथा च ते परस्परं भाषन्ते,* ध्रुवं ते छन्नाः पार्थाः प्रचरन्ति ।"

ततः स राजा द्रुपदः प्रहृष्टः तेषाम् (अन्तिके) पुरोहितं प्रेषयामास । 'युष्मान् विद्याम, पाण्डुसुतः स्थ कच्चित्' इति भाषमाणः ।

नृपतेः पुरोधाः गृहीत-वाक्यः गत्वा तेषां प्रशंसाम् अभिधाय नृपतेः समग्रं वाक्यम् अनु-क्रम-विक्रमेण यथावदुवाच—"वरदः पाञ्चालराजः, अवनीश्वरः हिः, वः वरार्हान् विज्ञातुम् इच्छति । सः इमं लक्ष्यस्य वेद्धारं दृष्ट्वा हर्षस्य अन्तं न प्रतिपद्यते । ज्ञाति-कुलानु-पूर्वीम् आख्यात । द्विषतां शिरःसु पदं कुरुध्वम् । सानुगस्य पाञ्चालराजस्य, मम च इदं हृदयं प्रदयध्वम् । पाण्डुः हि राज्ञः द्रुपदस्य, प्रियः सखा आत्म-समो बभूव । तस्यैष कामः मम इयं दुहिता कौरवाय हि स्नुषां

* भाषन्ति इति आर्षः पाठः । १९५।१३

प्रदास्यामि।"

ततो अथ राजा उक्तवाक्यं, विनीतं हि स्थितं पुरोहितं समुदीक्ष्य समीपतः भीमम् इदं शशास—अस्मै पाद्यं तथा अर्घ्यं प्रदीयताम्। द्रुपदस्य राज्ञः मान्यः पुरोधाः तस्मै अभ्यधिका हि पूजा प्रयोज्या।"

नरेन्द्र! ततः भीमः तत् कृतवान्। हर्षात् तां चैव पूजां प्रतिगृह्य सुखोपविष्टं पुरोहितं ब्राह्मणं युधिष्ठिर उवाच—"पाञ्चाल-राजेन राज्ञा द्रुपदेन स्व धर्म-दृष्टेन यथा सा प्रदिष्ट-शुल्कासुता निसृष्टा न कामात्, तेन वीरेण तथा अनुवृत्ता। तत्र न वर्णेषु, न चापि शीले, न कुले, न गोत्रे निवद्धा कृता। सज्येन हि कृतेन कार्मुकेण, विद्धेन हि लक्ष्येण सा विसृष्टा। तथा तेन महात्मना सा इयं कृष्णा पार्थिव-संघ-मध्ये जिता एवं गते अद्य सोमकिः राजा असुखाय संतापं कर्तुं न अर्हति। राज्ञः द्रुपदस्य यो असौ कामः सः अपि पार्थिवस्य संपत्स्यति। तथा हि तद् धनुः मन्दबलेन, मौर्व्या समायोजयितुं न शक्यम्। न च अकृतास्त्रेण न हीनजेन लक्ष्यं तथा पातयितुं हि शक्यम्। तस्माद् अद्य दुहितुः निमित्तं पाञ्चाल-राजः तापं कर्तुं न अर्हति। न च अपि तत्पातनम् इह भुवि मानवेन अन्यथा कर्तुं शक्यम्।

युधिष्ठिरे एवं ब्रुवति एव पाञ्चालराजस्य समीपतः अन्यः

द्वितीयः नरः 'इह अन्नं सिद्धं' निवेदयिष्यन् आशुः तत्र आजगाम ।

इति श्री महाभारते शतसाहस्त्र्यां धृष्टद्युम्न प्रत्यागमनम् ।



## पाण्डव-विवाहः

दूत उवाच—"राज्ञा द्रुपदेन जन्यार्थं विवाह-हेतोः अन्नम् उप-संस्कृतम् । कृत-सर्व-कार्याः तद् आप्नुवध्वम्, तत्रैव कृष्णां च, चिरं न कार्यम् । काञ्चन-पद्म-चित्राः इमे रथाः सदश्वयुक्ताः वसुधाधिपार्हाः । सर्वे एतान् समारुह्य पाञ्चाल-राजस्य तत् निवेशनं परैत ।"

वैशम्पायन उवाच—"तं पुरोहितं परियाप्य, ततः ते सर्वे कुरुपुङ्गवाः तानि महान्ति यानानि, कुन्ती कृष्णा च एक-याने सह आस्थाय प्रयाताः ।

भारत ! पुरोहितस्य वाक्यानि तु श्रुत्वा, यानि धर्म-राजः उक्तवान्-अथ कुरूत्तमानां जिज्ञासया एव अनेकानि द्रव्यानि उप संजहार । फलानि, माल्यानि संस्कृतानि च, वर्माणि, चर्माणि तथा आसनानि, राजन् ! कृषिनिमित्तम्—गाः चैव रज्जुः, अन्यानि च बीजानि ।

अन्येषु च शिल्पेषु यानि अपि स्युः सर्वाणि अखिलेन कृतानि। यानि च अपि क्रीडा-निमित्तानि भानुमन्ति वर्माणि, चर्माणि च, महान्तः खड्गाः, चित्राः अश्वरथाः, अग्र्याणि धनूंषि, चित्राः च शराः, शक्त्यृष्टयः, काञ्चन-भूषणाः, प्रासाः, भूशुण्डयः च, परश्वधाः च, तथेह सर्वं सांग्रामिकं, उत्तम-वस्तु-वन्ति शय्यासनानि, तथैव च तत्र विविधं वासः तानि सर्वाणि राज्ञा तत्र उपजहार।

कुन्ती साध्वीं कृष्णां परिगृह्य द्रुपदस्य अन्तः पुरम् आविवेश। अदीन सत्त्वाः स्त्रियः च तां कौरव-राज-पत्नीं प्रत्यर्चयामासुः।

राजन्! राजा, राज्ञः सचिवाः, सर्वे च पुत्राः, तथा राज्ञः सुहृदः, सर्वे प्रेष्याः तान् सिंह-विक्रान्तगतीन्, महर्षभाक्षान्, अजिनोत्तरीयान्, गूढोत्तरांसान्, भुजगेन्द्र-भोग-प्रलम्ब-बाहून् पुरुष-प्रवीरान् निरीक्ष्य तत्र निखिलेन अतीव हर्षं समापेतुः। तथा ते नराग्र्यः वीराः सपाद-पीठेषु महार्हेषु परमासनेषु अविशङ्कमानाः, न विस्मयन्तः यथानुपूर्वं विविशुः।

सुमृष्ट-वेशाः दासाः दास्याः च संभोजकाः च जाम्बुनद-राजतीषु पात्रीषु उच्चावचं पार्थिव-भोजनीयम् अन्नम् उपाजह्रुः। ते पुरुष-प्रवीराः तत्र यथात्मकामं सुभृशं प्रतीताः भुक्त्वा, सर्वाणि वस्तूनि उत्क्रम्य, राजन्!

नृवीराः ते सांग्रामिकं विविशुः। पार्थिव! द्रुपदस्य पुत्रः राजा, सर्वैः मन्त्रि-मुख्यैः सह तत् लक्षयित्वा, उपेत्य हृष्टाः कुन्ती-सुतान् राजपुत्रान् समर्थयामासुः।

ततः महाद्युतिः पाञ्चाल्यः राजपुत्रं युधिष्ठिरम् आहूय ब्राह्मणेन परिग्रहेण परिगृह्य अदीनात्मा सुवर्चसं कुन्तीपुत्रम् अपृच्छत्—"भवतः क्षत्रियान्, उत ब्राह्मणान् गुणसम्पन्नान् वैश्यान् वा, अथवा शूद्र-योनिजान् कथं जानीमः। भवान् सत्यं ब्रवीतु। नोहि अत्र महान् सन्देहः। अपि नः मनः संशयस्यान्ते सन्तुष्टिम् आवहेत्। परन्तप! अपि नो भागधेयानि शुभानि स्युः। इच्छया तत् सत्यं ब्रूहि। सत्यं राजसु शोभते। इष्टा-पूर्तेन च तत् वक्तव्यं न तु अनृतम्। अरिन्दम! तव हि अमर-संकाश वाक्यं श्रुत्वा, ध्रुवं विधानतः विवाहकरणम् आस्थास्यामि।"

युधिष्ठिर उवाच—"पाञ्चाल्य राजन्! त्वं विमनाः मा भूः। ते प्रीतिः अस्तु। असंशयं ते ईप्सितः ध्रुवः कामः संवृत्तः। राजन्! वयं महात्मनः पाण्डोः क्षत्रियाः पुत्राः। मां ज्येष्ठं कौन्तेयं विद्धि। इमौ भीम-सेनार्जुनौ। राजन्! तव सुता राजसंसदि आभ्याम् अजिता। यत्र कुन्ती कृष्णा च व्यवस्थिता तत्र यमौ। नरर्षभ! ते मानसं दुःखं व्यपैतु। क्षत्रियाः स्म। ते इयं सुता पद्मिनी इव

ह्रदात् अन्यह्रदं गता। महाराज! एतत् सर्वं ते तथ्यं ब्रवीमि। इति भवान् हि अस्माकं गुरुः, परमं परायणम्।"

वैशम्पायन उवाच—ततः सः द्रुपदो राजा हर्ष-व्याकुल-लोचनः मुदा युक्तः तं युधिष्ठिरं प्रतिवक्तुं न अशकत् स परन्तपः यत्नेन तु तं हर्षं संनिगृह्य तदा युधिष्ठिरं वाचा अनुरूपं प्रत्युवाच—एनं च पप्रच्छ, यथा ते पुरात् प्रद्रुताः स पाण्डवः आनुपूर्व्येण तस्मै सर्वम् आचख्यौ। राजा द्रुपदः कुन्ती-पुत्रस्य तद् भाषितं श्रुत्वा तदा नरेश्वरं धृतराष्ट्रं विगर्हयामास। तं कुन्ती-पुत्रं युधिष्ठिरं च आश्वासयमास। वदतां वरः द्रुपदः राज्याय च प्रतिजज्ञे।

ततः कुन्ती कृष्णा च भीमसेनार्जुनौ अपि, यमौ राजा च संदिष्टं महत् भवनं विविशुः। राजन्! यज्ञसेनेन पूजिता ते तत्र न्यवसन्।

ततः प्रत्याश्वस्ततः राजा पुत्रैः सह तम् उवाच—अद्य अयं कुरुनन्दनः विधिवत् पाणिं गृह्णातु। महाबाहुः अर्जुनः पुण्ये अहनि क्षणं कुरुताम्।

ततः धर्मात्मा राजा युधिष्ठिरः तम् अब्रवीत्—विशांपते! मम अपि तावत् दारसम्बन्धः कार्यः।

वैशम्पायन उवाच—ततः भगवान् धर्मराजम् अब्र-

वीत्—"युधिष्ठिर । अद्यैव पुण्याहम् । अद्य चन्द्रमा पौष्यं योगम् उपैति । अद्य पूर्वं कृष्णायाः त्वं पाणिं गृहाण ।"

ततो सपुत्रः राजा यज्ञसेनः जन्यार्थम्, उक्तं बहु तत् अग्र्यं, बहुभिः रत्नैःआप्लाव्य विभूष्य च कृष्णां सुतां समानयामास। ततस्तु नृपस्य सर्वे सुहृदः सहिताः मन्त्रिणः च द्विजाः यथा-प्रधानाः पौराः च परम प्रतीताः विवाहं दृष्टुं समाजग्मुः । ततः अस्य विस्तीर्ण-पद्मोत्पल भूषिताजिरं वेश्म अग्र्यजनोपशोभितं बलौघ-रत्नौघ-विचित्रम् आबभौ यथा निर्मलतारकान्वितं नभः ।

प्रभो ! ततः ते विभूषिताः कुण्डलिनः युवानः महार्हवस्त्राः वरचन्दनोक्षिताः कौरवराजपुत्राः कृताभिषेकाः कृत-मङ्गलक्रियाः अग्नि-समान-वर्चसा पुरोहितेन धौम्येन सहैव क्रमेण सर्वे यथाविधि सदः अभिनन्दिनः महर्षभाः गोष्ठम् इव विविशुः ।

ततः स वेद-पारगः समाधाय मन्त्रैः ज्वलितं हुताशनं जुहाव मन्त्रवित् । युधिष्ठिरं च अपि उपनीय कृष्णाया सह एव नियोजयामास । स वेद-पारगः तौ प्रगृहीत-पाणी प्रदक्षिणं परीणयामास । ततः पुरोहितः तम् आजि-शोभिनम् अभ्यनुज्ञाय राजगृहात् विनिर्ययौ ।

विवाहे कृते द्रुपदः महारथेभ्यः वहुरूपम् उत्तमं धनं ददौ—हेम-खलीन-मालिनां चतुर्युजां वर-हेम-मालिनां रथानां शतम्, तथा हेम-शृङ्गिणां गिरीणां शतम् इव पद्मिनां गजानां शतम्, तथैव महार्ह-वेषाभरणाम्बर-स्रजम् अग्र्य-यौवनं दासी शतम्। ततः तु विवाहे कृते पाण्डवाः प्रभूतरत्नां तां श्रियम् उपलभ्य तस्य पांचाल-नृपस्य पुरे महाबला प्रतिमाः विजह्रुः।

इति श्री महाभारते शतसाहस्र्यां पाण्डव-विवाहः



# श्री कृष्णोपहार-प्रेषणम्

वैशम्पायन उवाच—"पाण्डवैः सह संयोगं गतस्य द्रुपदस्य तेभ्यो अपि कथंचन भयं न बभूव। महात्मनः द्रुपदस्य ताः नार्यः कुन्तीम् आसाद्य, नाम संकीर्तयन्त्यः अस्याः पादौ स्वमूर्धभिः जग्मुः। क्षोम-संवीता कृष्णा, कृत-कौतुक-मंगला श्वश्र्वाः कृताभिवादना, कृताञ्जलिः प्रह्वा तस्थौ। पृथा प्रेम्णा रूप-लक्षण-सम्पन्नां शीलचार-समन्वितां स्नुषां द्रोपदीम् आशीर्वचनम् अवदत्।

"जीवसूर्वीरसू भद्रे बहु-सौख्य-समन्विता।
सुभगा भोग-सम्पन्ना यज्ञ-पत्नी पतिव्रता॥"

आ० प० २०१।७

अतीथीन्, आगतान्, साधून्, वृद्धान्, बालान्, तथा गुरून् यथान्यायं पूजयन्त्या ते समाः शश्वद् गच्छन्तु। कुरु जाङ्गल-मुख्येषु राष्ट्रेषु नगरेषु च धर्मवत्सला नृपतिम् अनु अभिषिच्यस्व। स गुणान्विते ! पृथिव्यां यानि गुणवन्ति रत्नानि, कल्याणि ! त्वं सुखिनी शरदां शतम् तानि आप्नुहि। वधु ! यथा अद्य त्वाम्*क्षौम-

---

* त्वा इत्यार्षः प्रयोगः                    २०१।१२

संवृताम् अभिनन्दामि, तथा भूयः जातपुत्रां गुणान्विताम् अभिनन्दिष्ये ।

ततः माधवः कृष्णः वैडूर्यमणि-चित्राणि, हैमानि आभरणानि, महार्हाणि नानादेश्यानि वासांसि, स्पर्शवन्ति शुभानि कम्बलाजि रत्नानि, विविधानि महान्ति च शयनासनयानानि, शततः वैदूर्य-वज्र-चित्राणि च भाजनानि, सहस्रशः नानादेश्याः रूप-यौवन-दाक्षिण्यैः उपेताः स्वलंकृताः प्रेष्याः संप्रददौ ।

अमेयात्मा मधुसूदनः विनीतान् गजान् भद्रान् स्वलंकृतान्, सदश्वान्, शुभ्रैः सौवर्णैः पट्टैः अलंकृतान् दान्तान् रथान्, तेभ्यः* कोटिशः अकृतकं सुवर्णं तथा वीथी-कृतं प्राहिणोत् ।

धर्म-राजो युधिष्ठिरः परमया मुदा युक्तः गोविन्द-प्रिय-काम्यया तत् सर्वं प्रतिजग्राह ।

इति श्री महाभारते शतसाहस्र्यां संहितायां
श्री कृष्णोपहार-प्रेषणम्

* तेषां इत्यार्षः प्रयोगः २०।१८

## पाण्डव-समाचारः

वैशम्पायन उवाच—ततः राज्ञाम् आप्तैः चरैः प्रवृत्तिः उदनीयत—'शुभा द्रौपदी पाण्डवैः पतिभिः उपपन्ना। येन महात्मना धनुः आयम्य तद् लक्ष्यं विद्धम् सः जयतां श्रेष्ठः महाबाण-धनुर्धरः अर्जुनः। यः बली मद्र-राजं शल्यं प्रोत्क्षिप्य अपातयत्, रणे संक्रुद्धः वृक्षेण पुरुषान् त्रासयामास. न चास्य महात्मनः तत्र कश्चित् संभ्रमः आसीत्, स भीमस्पर्शः शत्रु-सेनाङ्ग-पातनः भीमः।'

प्रशान्तान् कौन्तेयान् पाण्डु-नन्दनान् ब्रह्म-रूपधरान् श्रुत्वा मनुजेन्द्राणां विस्मयः समजायत। पुरा कुन्ती सपुत्रा जतुगृहे दग्धा श्रुता, ते नराधिपाः तान् पुनर्जातान् इव अमन्यन्त। तदा पुरोचन-कृतेन अतिनृशंसेन कर्मणा भीष्मं कौरवं धृतराष्ट्रं चैव धिग् अकुर्वन्। स्वयम्वरे वृत्ते सर्वे एव ते राजानः पाण्डवान् वृतान् विदित्वा यथागतं विप्रजग्मुः।

अथ दुर्योधनो भ्रातृभिः, अश्वथाम्ना, मातुलेन, कर्णेन, कृपेण च सह द्रौपद्या श्वेतवाहनं वृतं दृष्ट्वा विमनः विनिवृत्तः। दुःशासनः तु तं मन्दं मन्दमिव अब्रवीत्—'यदि असौ

ब्राह्मणः न स्यात् द्रौपदीं न विन्देत । राजन् ! तं कश्चित् तत्त्वतो न वेद ।

'दैवं च परमं मन्ये, पौरुषं चाप्यनर्थकम् ।
धिगस्तु पौरुषं तात, ध्रियन्ते यत्र पाण्डवाः ॥'

आ० प० २०२।१२

ते एवं भाषमाणाः पुरोचनं च निन्दन्तः दीनाः विगत-चेतसः हास्तिनपुरं विविशुः : महौजसः पार्थान् हव्यभुजः मुक्तान्, द्रुपदेन च संयुक्तान्, दृष्ट्वा धृष्ट-द्युम्नं, तथैव शिखण्डिनं, अन्यान् सर्वान् च युद्ध-विशारदान् द्रुपदस्य आत्मजान् संचिन्त्य विगत-संकल्पाः त्रस्ताः ।

अथ ततः विदुरः द्रौपदीं पाण्डवैः वृतां धार्तराष्ट्रान् च भग्नदर्पान् व्रीडितान् उपागतान् श्रुत्वा प्रीतमनाः क्षत्ता धृतराष्ट्रम् उवाच—"विशाम्पते ! दृष्ट्या कुरवो वर्धन्त" इति ।

वैचित्रवीर्यः तु नृपः विदुरस्य तत् निशम्य विस्मितः अब्रवीद्—"भारत ! परम-प्रीतः दिष्ट्या दिष्ट्या ।" इति'

स प्रज्ञा-चक्षुः नरेश्वरः अविज्ञानात् ज्येष्ठं पुत्रं दुर्योधनं द्रुपद-कन्यया वृतं मन्यते (स्म) । अथ द्रौपद्याः बहु भूषणम् आज्ञापयामास । तदा पुत्रं दुर्योधनम् 'कृष्णां वै आनीयताम्' इति (उवाच) ।

अथ अस्य पश्चात् विदुरः द्रुपदेन ह पूजितान्

वृतान् पाण्डवान् सर्वान् कुशलिनः, तस्मिन्नेव स्वयंवरे बहुबल-समन्वितान् तेषाम् अन्यान् सम्बन्धिनः पाण्डवैः समागतान् आचख्यौ।

धृतराष्ट्र उवाच—"यथैव पाण्डोः पुत्राः, तथैव अभ्यधिका तु मम। यथा च मम तान् प्रति अभ्यधिका बुद्धिः तच्छृणु। यत् ते वीराः पाण्डवाः कुशलिनः, मित्रवन्तः, तेषां च अन्ये वै महाबलाः बहवः सम्बन्धिनः। क्षत्तः! को हि गत-श्रीः अपि पाण्डवः द्रुपदं मित्रम् आसाद्य भवेनार्थी न बुभुषेत्।

वैशम्पायन उवाच—राजन्! विदुरः तं तथा-भाषमाणं प्रत्यभाषत—"राजन्! ते एषा बुद्धिः नित्यं शतं समाः भवतु।" इत्युक्त्वा विदुरः स्वं निवेशनं प्रययौ।

इति श्री-महाभारते शतसाहस्र्यां पाण्डव-समाचारः



## पाण्डव-नयनमन्त्रणा

वैशम्पायन उवाच—विशांपते ! ततः तदा दुर्योधनः राधेयः च धृतराष्ट्रम् उपागम्य इदं वचः अब्रूताम्—"विदुरस्य सन्निधौ त्वां दोषं वक्तुं न शक्नुवः। विवित्तम् इति रच्यावः। इदं तव किं चिकीर्षितम्। तात ! यत् सपत्न-वृद्धिम् आत्मनः वृद्धिं मन्यसे, यत् क्षत्तुः समीपे द्विषतां वरान् अभिष्टौषि। अनघ ! अन्यस्मिन् नृप-कर्तव्ये त्वम् अन्यत् कुरुषे। तात ! तेषां बल-विघातो हि नित्यशः कर्तव्यः। ते वयं प्राप्त-कालस्य चिकीर्षां मन्त्रयामहे यथा ते सपुत्र-बल-बान्धवान् नः न ग्रसेयुः।

धृतराष्ट्र उवाच—"अहम् अपि एतत् एवं चिकीर्षामि, यथा युवाम्। अहं विदुरं प्रति तु आकारं विवक्तुं न इच्छामि। ततः विशेषतः तेषां गुणान् एव कीर्तयामि (येन) विदुरः इङ्गितैः मम अभिप्रायं न अवबुध्येत। ते वयं प्राप्त-कालस्य चिकीर्षां मन्त्रयामहे। सुयोधन ! त्वं यत् प्राप्तं मन्यसे तद् ब्रूहि।

दुर्योधन उवाच—"अद्य तान् कुन्तीपुत्रान् पाण्डवौ च माद्रीपुत्रौ कुशलैः आप्त-कारिभिः विप्रैः भेदयामः। अथवा महद्भिः वित्त-संचयैः राजा द्रुपदः, अस्य पुत्राः,

अमात्याः चैव सर्वशः प्रलोभ्यन्ताम् । यथा राजा कुन्ती-पुत्रं युधिष्ठिरं परित्यजेत् । अथवा ते तेषां निवासं तत्रैव रोचयन्तु । ते इह एषां वासं दोषवद् वर्णयन्तु, भिद्यमानाः पाण्डवाः तत्रैव मनः कुर्वन्तु । अथवा केचिद् उपाय-निपुणाः कुशलाः नराः इतरेतरतः अनुरागात् पार्थान् भेदयन्तु । राजन् ! भीमसेनस्य वा उपाय-कुशलैः छन्नैः नरैः मृत्युः विधीयताम् । स हि तेषां बलाधिकः कौन्तेयः तम् आश्रित्य हि पुरा अस्मान् न मन्यते । सः हि तीक्ष्णः शूरः च तेषां च परायणम् । राजन् ! तस्मिन् तु अभिहते हतोत्साहाः हतौजसः राज्याय न यतिष्यन्ते । स हि तेषां व्यपाश्रयः । पृष्ठगोपे वृकोदरे अर्जुनः संख्ये अजेयः । फाल्गुनः तम् ऋते युद्धे राधेयस्य न पाद-भाक् । ते भीमसेनम् ऋते दुर्बलाः महत् दौर्बल्यं जानानाः अस्मान् बलवतो ज्ञात्वा न यतिष्यन्ते । राजन् ! इह वा आगतेषु निदेशवश-वर्तिषु यथा-शास्त्रं निबर्हणम् प्रवर्तिष्यामहे । अथवा एकैकः कौन्तेयः दर्शनीयाभिः प्रमदाभिः विलोभ्यताम्, ततः कृष्णा विरज्यताम् । तेषाम् आगमनाय वै राधेयः प्रेष्यताम् । आप्तकारिभिः तैः तैः प्रकारैः संनीय पात्यन्ताम् । एतेषाम् उपायानां यो अपि ते निर्दोषवान् मतः, पुरा तस्य प्रयोगम् आतिष्ठ, कालो-ऽति वर्तते । यावत् पार्थिवर्षभे द्रुपदे हि अकृतविश्वासाः

तावदेव हि ते शक्याः ततः परं तु न शक्याः। तात! एषा मम मतिः साध्वी यदि वा असाध्वी, निग्रहाय प्रवर्तते। राधेय! किं वा मन्यसे?"

कर्ण उवाच—"दुर्योधन! तव प्रज्ञा सम्यग् न इति मे मतिः। कुरुवर्धन! ते पाण्डवाः हि उपायेन न शक्याः। पूर्वमेव हि निग्रहीतुं त्वया सूक्ष्मैः उपायैः यतिताः न चैव तथा शकिताः। पार्थिव इह एव तव समीपे वर्तमानाः अजात-पक्षाः शिशवः बाधितुं न शकिताः। अद्य ते विदेशस्थाः सर्वशः जात-पक्षाः विवृद्धाः। कौन्तेयाः न उपाय-साध्याः, मम एषा अच्युता मतिः। न च दिष्ट-कृतेन ते व्यसनैः योक्तुं शक्याः। पितृ-पैतामहं पदम् इप्सवः शकिताः च। परिद्यूनान् वृतवती कृष्णा अपि च तेभ्यः परैः भेदयितुं न शक्येत।

आर्य-व्रतश्च पाञ्चाल्यो न स राजा धन-प्रियः।
न सन्त्यक्ष्यति कौन्तेयान्, राज्य-दानैरपि ध्रुवम्॥
आ० प० २०४।६

तथा अस्य गुणवान् पुत्रः पाण्डवान् अनुरक्तः, तस्माद् अहं तान् उपाय-साध्यान् कथंचन न मन्ये। पुरुषर्षभ! अद्य इदं तु अस्माकं कर्तुं क्षमम्—विशांपते! यावत् ते पाण्डवेयाः न कृत-मूलाः तावत् ते प्रहर-

णीयाः। तात! यत् तुभ्यं रोचताम्। यावत् पाञ्चालको लघुः, अस्मत्-पक्षो महान् तावत् तेषां प्रहरणं क्रियताम्। मा विचारय। यावत् गान्धारे तेषां वाहनानि, प्रभूतानि मित्राणि, कुलानि च न तावत् विक्रमस्व*। पार्थिव! तावत् विक्रमस्व, यावत् महावीर्यैः पुत्रैः सह पाञ्चाल्यो राजा उद्यमे मनः न कुरुते। यावत् (च) पाण्डवेयानां राज्यार्थे यादव-वाहिनीं कर्षन् वार्ष्णेयः पाञ्चाल्य-सदनं प्रति न आयाति। कृष्णस्य पाण्डवार्थे न केवलं राज्यं वसूनि, विविधाः भोगाः च, न कथंचन अत्याज्यम् अस्ति। महात्मना भरतेन विक्रमेण मही प्राप्ता, पाकशासनः च विक्रमेण त्रीन् लोकान् जितवान्।

विक्रमं च प्रशंसन्ति, क्षत्रियस्य विशाम्पते।
स्वको हि धर्मः शूराणां, विक्रमः पार्थिवर्षभः॥

आ० प० २०४।११

राजन् ते वयं महता चतुरङ्गिणा बलेन शीघ्रं द्रुपदं प्रमथ्य पाण्डवान् शीघ्रम् आनयामहे! न हि साम्ना, न दानेन, न च भेदेन पाण्डवाः साधयितुं शक्याः, तस्माद् विक्रमेण एव तान् जहि। तान् विक्रमेण जित्वा, इमाम् अखिलां मेदिनीं भुङ्क्ष्व। जनाधिप! अतोऽन्यं

* विक्रम इत्यार्षः प्रयोगः २०४।१४।१५

कार्योपायं न प्रपश्यामि ।

वैशम्पायन उवाच---प्रतापवान् धृतराष्ट्रः तु राधेय-वचः श्रुत्वा, अभिपूज्य ततः पश्चात् इदं वचनम् अब्रवीत्---कृतास्त्रे महाप्राज्ञे सूतनन्दने त्वयि ईदृशम् इदं विक्रमसंपन्नं वचनम् उपपन्नम्। भूय एव तु भीष्मः, द्रोणः, विदुर एव च, युवां च नः बुद्धिं कुरुत । या नः सुखोय भवेत् ।

महाराज ! ततः तदा सुमहायशाः धृतराष्ट्रः तान् सर्वान् मन्त्रिणः आनाय्य मन्त्रयामास ।

भीष्मः उवाच---"पाण्डु-पुत्रैः विग्रहः, कथंचन मे न रोचते असंशयम् मे यथैव धृतराष्ट्रः ! तथा पाण्डुः । मम यथा गान्धार्याः तथा कुन्तीसुताः । धृतराष्ट्र यथा ते मम रक्ष्याः तथा तव । पार्थिव ! मम, राज्ञः च, दुर्योधनस्य, तथा सर्वेषां कुरूणाम्, अन्येषाम् अपि, एवं गते तैः विग्रहं रोचते*? वीरैः संधाय अर्ध-भूमिः दीयताम्। तेषाम् अपि कुरुसत्तमानाम् इह प्रपितामहानां पितुश्चैव राज्यम् ।

तात दुर्योधन ! यथा त्वम् इदं राज्यं पैत्रिकम् इत्येवं पश्यसि, ते पाण्डवाः अपि एवं पश्यन्ति । यदि ते यशस्विनः पाण्डवेयाः राज्यं न प्राप्ताः, कुतः एव तव

---

* रोचे इत्यार्षः प्रयोगः २०५।४

अपि इदम्। कस्यचित् भारतस्य अपि वा। भरतर्षभ! त्वम् अधर्मेण राज्यं प्राप्तवान्। पूर्वम् एव ते ऽपि राज्यम् अनुप्राप्ता इति मे मतिः।

पुरुष-व्याघ्र! तेषां राज्यस्य अर्धं मधुरेण एव प्रदीयताम्। एतद् हि सर्वजनस्य च हितम्। अतो अन्यथा चेत् क्रियते नो हितं न भविष्यति। तव अपि सकला अकीर्तिः भविष्यति न संशयः।

कीर्ति-रक्षणमातिष्ठ कीर्तिर्हि परमं बलम्।
नष्ट-कीर्तेर्मनुष्यस्य जीवितं ह्यफलं स्मृतम्॥

आ० प० २०५।१०

कौरव! यावत् मनुष्य-कीर्तिः न प्रणश्यति, गान्धारे! तावत् जीवति! नष्ट-कीर्तिः तु नश्यति। महाबाहो! कुरुकुलोचितं तम् इमं धर्मम् आतिष्ठ। आत्मनः पूर्वेषाम् अनुरूपं कुरु। दिष्ट्या पार्थाः ध्रियन्ते दिष्ट्या सा पृथा जीवति। दिष्ट्या पापः पुरोचनः न सकामः अत्ययं गतः। यदा-प्रभृति ते कुन्ती-भोजसुतासुताः दग्धाः, गान्धारे! तदा प्रभृति कुन्तीं तथा-गतां श्रुत्वा लोके प्राणभृतां कञ्चित् अभिवीक्षितुं न शक्नोमि। तथा चापि लोकः दोषेण पुरोचनं न मन्येत। पुरुष-व्याघ्र। यथा त्वाम्। लोकः दोषेण गच्छति। महाराज! तद् इदं तेषां जीवितं

पाण्डवानां न दर्शनं तत्र किल्विष-नाशनं संमन्तव्यम्। कुरु-नन्दन! जीवतां तेषां वीराणां स्वयं वज्रभृता अपि पित्र्यः अंशः आदातुं न शक्यः। ते सर्वे धर्मे अवस्थिताः। सर्वे चैव एक-चेतसः अधर्मेण च निरस्ताः, विशेषतः राज्ये तुल्ये।

यदि धर्मस्त्वया कार्यः, यदि कार्यं प्रियं च मे।
क्षेमं च यदि कर्तव्यं, तेषामर्धं प्रदीयताम्॥

आ० प० २०५।२०

द्रोण उवाच—"नृप धृत-राष्ट्र! मन्त्राय समुपानीतैः हितैः धर्म्यम् अर्थ्यं यशस्यं च वाच्यम् इति अनुशुश्रुम। तात! मम अपि एषा मतिः, या महात्मनः भीष्मस्य। कौन्तेयः तु संविभज्याः एषः सनातनः धर्मः। भारत! कश्चित् प्रियं-वदः नरः तेषाम् अर्थाय बहुलं रत्नम् आदाय आशु द्रुपदाय प्रेष्यताम्। तस्मै सः वसु आदाय गच्छतु। तथा त्वत्संयोगोद्भवां च परमां वृद्धिं ब्रूयात। राजन्! तथा द्रुपदे धृष्टद्युम्ने च त्वां दुर्योधनं च संप्रीयमाणम् असकृत् ब्रूयात्। पुनः पुनः कौन्तेयान् माद्रीपुत्रौ च सान्त्वयन् योगस्य अपि उचितत्वं प्रियत्वं च वर्णयेत्। राजेन्द्र! तव वचनात् द्रौपद्याः हिरण्मयानि बहूनि शुभ्राणि आभरणानि संप्रयच्छतु। भरतर्षभ! तथा सर्वेषां द्रुपद-पुत्राणां, सर्वेषां पाण्डवानां च, कुन्त्या च यानि युक्तानि।

एवं सो ऽनन्तरं पाण्डवैः सह सान्त्व-समायुक्तम् उक्त्वा तेषां आगमनं प्रति ब्रुयात् ।

वीरेषु अनुज्ञातेषु पाण्डवान् इह आनेतुं शोभनं बलं दुःशासनो विकर्णः च गच्छतु, ततः ते सदा त्वया पूज्य-मानाः श्रेष्ठाः पाण्डवा प्रकृतीनाम् अनुमते पैत्रिके पदे स्थास्यन्ति । महाराज ! एतत् तव पुत्रेषु, तेषु चैव हि भीष्मेण सह (अहं) औपायिकं वृत्तं मन्ये ।

कर्ण उवाच—"सर्व-कार्येषु अनन्तरौ अर्थमानाभ्यां योजितौ त्वच्छ्रेयः न मन्त्रयेताम् । ततः अद्भुततरं किम् । यो वै दुष्टेन मनसा, प्रछन्नेनान्तरात्मना यन्निःश्रेयसं नाम कुर्यात् कथं सतां मतं ( कुर्यात् )। मित्राणि अर्थ-कृच्छ्रेषु श्रेयसे च इतराय च, सर्वस्य विधिपूर्वं हि दुःखं यदि वा सुखम् ।

कृत-प्रज्ञो ऽकृत-प्रज्ञो बालो वृद्धश्च मानवः ।<br>
स-सहायो ऽसहायश्च, सर्वं सर्वत्र विन्दति ॥

आ० प० २०६।१६

श्रुयते हि—पुरा कश्चित् राजा अम्बुवीच इति मागधानां महीक्षिताम् ईश्वरः राजगृहे आसीत् । तदा सर्वैः करणैः हीनः स नृपः उच्छ्वास-परमः सर्वेषु कार्येषु आमात्यसंस्थः अभवत् । तस्य महाकर्णिः तदा एकेश्वरः बभूव । स आत्मानं लब्धबलं मन्यमानः

अत्रमन्यते। तदा स मूढः राज्ञः उपभोग्यानि स्त्रियः, रत्न-धानानि सर्वशः स्वयं आददे। लुब्धस्य तदादाय लाभात् लोभो ऽपि अवर्धत। तथा हि सवम् आदाय अस्य राज्यं जिहीर्षति। सर्वैः करणैः हीनस्य उच्छ्वास-परमस्य च राज्यं यतमानो अपि तद् राज्यं (आहर्तु) न शशाक इति नः श्रुतम्। तस्य सा पुरुषेन्द्रता किमन्यद्विहिता? विशांपते! यदि ते राज्यं विहितम् भविष्यति, सर्वलोकस्य मिषतः त्वयि तद् ध्रुवं स्थास्यते। अतो ऽन्यथा चेद्विहितं यतमानः न लप्स्यसे। विद्वन्! मन्त्रिणां साध्वसाधुताम् उपादत्स्व। दुष्टानाम् अदुष्टानां च भाषितं बोधव्यम्।"

द्रोण उवाच—"ते विद्मः। भावदोषेण यदर्थम् उच्यते। दुष्ट! त्वम् उत पाण्डव-हेतोः दोषमाख्यापयसि। कर्ण! कुलवर्धनं परमं हितं तु ब्रवीमि, अथ त्वं दुष्टं मन्यसे, यत्परमं हितं, ब्रूहि। यत् परं हितं ब्रवीमि अतो-ऽन्यथा चेत् क्रियते, न वै चिरेण एव कुरवो विनङ्क्ष्यन्ति (इति) मे मतिः।

विदुर उवाच—राजन्! त्वं बान्धवैः निःसंशयं श्रेयः वाच्यः असि। अशुश्रूमाणे वै वाक्यं न सं-प्रतितिष्ठति। राजन्। कुरुनन्दनः शान्तनवः भीष्मः प्रियं हितं

यद्वाक्यमुक्तवान्, तत् च न प्रतिगृह्णासि। तथा द्रोणेन उत्तमं हितं बहुधा भाषितम्। राधा-सुतः कर्णः च तत् तव हितं न मन्यते। राजन्! चिन्तयन् च तत्र सुहृत्तमं न पश्यामि। यो वा आभ्यां पुरुषसिंहाभ्यां प्रज्ञया अधिकः स्यात्। इमौ हि वयसा, प्रज्ञया, श्रुतेन च वृद्धौ। राजेन्द्र! त्वयि तथा पाण्डुसुतेषु च समौ। भारत, राजन्! धर्मे सत्यतायां दाशरथेः रामात् गयात् च अनवरौ, न संशयः। पुरस्ताद् अपि च किञ्चन अश्रेयः न उक्तवन्तौ। न च अनयोः त्वयि किंचिद् अपि अपकृतं लक्ष्यते। नृप! तौ सत्यपराक्रमौ पुरुष-व्याघ्रौ अनागसि त्वयि त्वच्छ्रेयः कथं न मन्त्रयेताम्। नराधिप! अस्मिन् लोके प्रज्ञावन्तौ नरश्रेष्ठौ, अतः त्वन्निमित्तं किञ्चित् जिह्मं न वदिष्यतः। इति मे नैष्ठिकी बुद्धिः वर्तते। कुरुनन्दन! न च धर्मज्ञौ अर्थ-हेतोः पक्ष-संश्रितं वक्ष्यतः। भारत! एतद् हि ते परमं श्रेयः अहं मन्ये। राजन्! यथा दुर्योधन-प्रभृतयः तव पुत्राः तथैव पाण्डवेयाः ते पुत्राः न संशयः। अतद्विदः तेषु चेत् किञ्चिद् अहितं मन्त्रयेयुः, विशेषतः ते मन्त्रिणः ते श्रेयः न प्रपश्यन्ति।

राजन्! अथ ते हृदये स्वेषु विशेषः वर्तते अन्तरस्थं विवृण्वानाः ध्रुवं ते श्रेयः न कुर्युः। राजन्! एतदर्थम् महात्मानौ न विकृतं किञ्चिद् ऊचतुः,

न हि एष तव निश्चयः । यत् च अपि पुरुषर्षभौ तेषाम् अशक्यताम् आहतुः, पुरुष-व्याघ्र ? तत् तथा, तद् भद्रं तव अस्तु ।

राजन् ! सव्य-साची श्रीमान् धनञ्जयः पाण्डवः मघवता अपि संग्रामे विजेतुं न शक्यः । नागायुतबलो महान् महाबाहुः भीमसेनः युद्धे कथम् अमरैः अपि विजेतुं शक्येत । तथैव यम-सुतौ इव यमौ युद्धे कृतिनौ जीवितम् इच्छता रणे कथं तौ विजेतुं न शक्यौ । यस्मिन् ज्येष्ठे पाण्डवे धृतिः अनुक्रोशः, क्षमा, सत्यं, पराक्रमः नित्यानि ,स रणे कथं जीयेत ।

'रामः येषां यज्ञधरः, जनार्दनः येषां मन्त्री, येषां च पक्षे सात्यकिः, येषां द्रुपदः श्वशुरः, द्रुपदात्मजाः वीराः भ्रातरः धृष्ट-द्युम्न-मुखाः श्यालाः तैः संख्ये किं न जितम् ।

भारत ! स (त्वं) तेषाम् अग्रे अशक्यतां च विज्ञाय, धर्मेण दायाद्यतां तेषु सम्यक् समाचार ।

राजन् ! इदं पुरोचन-कृतं निर्दिष्टम् आत्मनः महत् अयशः अद्य तेषाम् अनुग्रहेण प्रक्षालय । तेषाम् च अयम् अनुग्रहः नः कुले सर्वेषां चैव जीवितम्, परं श्रेयः, क्षत्रस्य च विवर्धनम् । राजन् ! महान् राजा द्रुपदो अपि

पुराः न कृतवैरः, तस्य सग्रहणं स्वपक्षस्य विवर्धनम् । विशाम्पते । दाशार्हाः बलवन्तः बहवः च,

यतःकृष्णः ततः सर्वे यतः कृष्णः ततोजयः ।
यच्च साम्नैव शक्येत कार्यं साधयितुं नृप ! ।
को वा देव-शप्तस्तत्कार्यं विग्रहेण समाचरेत् ॥

आ० प० २०८।२७

पौरजानपदाः जनाः पार्थान् जीवतः श्रुत्वा बल-प्रदर्शने हृष्टाः राजन् तेषां प्रियं कुरु। दुर्योधनः, च कर्णः च सौबलः शकुनिः चापि दुष्प्रज्ञाः अधर्मयुक्ताः । एषां वचः मा कृथाः । राजन् ! पुरा मया गुणवतः तव एतत् उक्तम्—"दुर्योधनापराधेन इयं प्रजा विनङ्क्ष्यति ।'

इति श्री महाभारते शत-साहस्र्यां पाण्डवानयन-मन्त्रणा

# विदुर गमनम्

धृतराष्ट्र उवाच—"शान्तनवः भीष्मः, भगवान् ऋषिः, विद्वान् द्रोणः च, त्वं च हितं, परमं वाक्यं सत्यं माम् ब्रवीषि। ते महारथाः वीराः कुन्तीपुत्राः यथा एव पाण्डोः तथैव धर्मतः सर्वे मम पुत्राः न संशयः। यथैव मम पुत्राणाम् इदं राज्यं विधीयते, तथैव पाण्डुपुत्राणाम् इदं राज्यं न संशयः।

क्षत्तः! गच्छ! एतान् मात्रा सह सुसत्कृतान् तथा भारत! देवरूपिण्या कृष्णया सह आनय। दिष्ट्या ते पार्थाः जीवन्ति। दिष्ट्या सा पृथा जीवति, दिष्ट्या च महारथाः द्रुपद-कन्यां लब्धवन्तः। दिष्टया सर्वे वर्धामहे, दिष्ट्या पुरोचनः शान्तः। महाद्युते! दिष्ट्या मम परं दुःखम् अपनीतम्।

वैशम्पायन उवाच—"भारत ततः धृतराष्ट्रस्य शासनात् यज्ञसेनस्य पाण्डवानां च सकाशे द्रौपद्याः, पाण्डवानां, यज्ञसेनस्य ( उपहाराय ) विविधान वसूनि रत्नानि च समुपादाय जगाम।

राजन्! सः सर्व-शास्त्र-विशारदः धर्मज्ञः तत्र गत्वा न्यायतः संयुक्तं द्रुमदम् उपतस्थिवान्। ततः सः चापि

विदुरं धर्मेण जग्राह। कुशल-प्रश्न-संविदं च यथा-न्यायं चक्रतुः। भारत ! तत्र पाण्डवान् वासुदेवं च ददर्श, ततः स्नेहात् परिष्वज्य स तान् अनामयं पप्रच्छ।

तैः च अपि स श्रीमद्-बुद्धिः यथा-क्रमं पूजितः। राजन् ततः तान् पाण्डु-नन्दनान् स्नेहयुक्तः धृतराष्ट्रस्य वचनात् पुनः पुनः अनामयं पप्रच्छ, कौरवैः दत्तानि पाण्डवानां, कुन्त्याः, द्रौपद्याः च विविधानि वसूनि रत्नानि च अपि प्रददौ। विनयान्वितः द्रुपद-पाण्डुपुत्राणां केशवस्य च सन्निधौ अमितमतिः प्रश्रितम् उवाच—"राजन् सहामात्यः, सपुत्रः मम वचः शृणु। सहामात्यः सबान्धवः सपुत्रः धृतराष्ट्रः पुनः पुनः प्रीयमाणः कुशलम् अब्रवीत्। नराधिप ! तथा सम्बन्धेन चापि दृढं प्रीतिमान्, सर्वशः कौरवैः सह महाप्राज्ञः भारद्वाजः तव प्रियसखः द्रोणः समाश्लेषमुपेत्य त्वां कुशलं परिपृच्छति।

पाञ्चाल्य ! धृतराष्ट्रः च त्वया सम्बन्धम् ईयिवान्, आत्मानं कृतार्थं मन्यते, तथा सर्वेऽपि कौरवाः। यज्ञसेन ! राज्य-संप्राप्तिः तेषां न तथा प्रीतिकरी मता यथा त्वया सह सम्बन्धकं प्राप्तस्य।

एतद् विदित्वा भवान् पाण्डवान् प्रस्थापयतु। कुरवः पाण्डुपुत्रान् द्रष्टुं भृशं त्वरन्ति। तथा एते नर-

र्षभाः वृथाचापि दीर्घकालं विप्रोषिताः नगरं द्रष्टुम् उत्सुका भविष्यन्ति। सर्वाः कुरुवर-स्त्रियः; नः विषयाः, पुरं च पाञ्चालीं कृष्णामपि द्रष्टुकामाः। स भवान् पाण्डुपुत्राणां सहदाराणां गमनम् आज्ञापयतु, एतद् अत्र मम मतम्। राजन् त्वया महात्मसु पाण्डवेषु निसृष्टेषु ततोऽहं धृतराष्ट्रस्य शीघ्रगान् प्रेषयिष्यामि—'कृष्णया सह कौन्तेयाः कुन्ती च आगमिष्यन्ति।'

इति श्री महाभारते शत-साहस्र्यां धृतराष्ट्रा-नुमतौ विदुरागमनम्





# राज्य-लम्भः

द्रुपद—उवाच"महाप्राज्ञ विदुर ! एवम् एतत्, यथा त्वम् अद्य माम् आत्थ । प्रभो ! अस्मिन् सम्बन्धे कृते मम अपि परमो हर्षः । एषां महात्मानां गमनम् अपि दृढ़ं युक्तम्, तावत् एतद् मया स्वयं स्व-गिरा तु वक्तुं न युक्तम् । वीरः कुन्ती-पुत्रो युधिष्ठिरः, भीमसेनार्जुनौ, पुरुषर्षभौ च यमौ, धर्मज्ञौ राम-कृष्णौ च (मन्यन्ते) तदा पाण्डवाः गच्छन्तु । एतौ हि पुरुष-व्याघ्रौ एषां प्रिय-हिते रतौ ।

युधिष्ठिर उवाच—"राजन् वयं सर्वे सहानुगाः त्वयि परवन्तः, नः प्रीत्या यथा वक्ष्यसि, वयं तत् करिष्यामहे ।"

वैशम्पायन उवाच—ततः वासुदेवः उवाच—"मम गमनं रोचते ; यथा वा सर्वधर्म-वित् राजा द्रुपदः मन्यते ।"

द्रुपद उवाच—"दाशार्हः पुरुषोत्तमः महाबाहुः वीरः यथैव प्राप्त-कालं मन्यते, सा मम निश्चिता बुद्धिः । साम्प्रतम् यथैव महाभागाः कौन्तेयाः मम तथैव वासुदेवस्य पाण्डु-पुत्राः न संशयः । कौन्तेयः पाण्डु-पुत्रः युधिष्ठिरः न तद् ध्यायति यथा पुरुष-व्याघ्रः केशवः एषां श्रेयः ध्यायति ।"

वैशम्पायन उवाच—"महीपते ततः महात्मना द्रुपदेन समनुज्ञाताः ते पाण्डवाः, कृष्णः, विदुरः च कृष्णां द्रौपदीं, यशस्विनीं कुन्तीं चैव आदाय नागसाह्वयं नगरं सविहारं सुखं जग्मुः। जनेश्वरः धृतराष्ट्रः वीरान् आगतान् श्रुत्वा, पाण्डूनां प्रतिग्रहाय कौरवान् प्रेषयामास। भारत! विकर्णं, महेष्वासं चित्रसेनं, परमेष्वासं द्रोणं, गौतमं, कृपमेव च। तदा तैः परिवृताः ते महाबलाः वीराः शोभमानाः शनैः हास्तिनपुरं नगरं प्रविविशुः। कौतूहलेन नगरं दीप्यमानम् इव अभवत्। तत्र प्रिय-चिकीर्षुभिः पौरैः उदीरिताः उच्चावचाः हृदयंगमा वाचाः, शोक-दुःखविनाशनाः पुरुष-व्याघ्राः ते पाण्डवाः अशृण्वन्। 'अयं सः धर्मवित् पुरुष-व्याघ्रः पुनर् आयाति. यः नः दायादान् स्वान् इव धर्मेण परिरक्षति। अद्य जन-प्रियः महाराजः पाण्डुः, अस्माकं प्रियं चिकीर्षुः वनाद् इव आगतः। न अत्र संशयः। तात! अद्य किम् नः सर्वेषां परं प्रियं न कृतं, यत् वीराः कुन्तीसुताः पुनः नः नगरम् आयाताः। यदि नः दत्तं, हुतं, तपः विद्यते, तेन पाण्डवाः नगरे शरदां शतं तिष्ठन्तु।"

ततः ते धृतराष्ट्रस्य महात्मनः भीष्मस्य, अन्येषां च तदर्हाणां पादाभिवन्दनं चक्रुः। अथ सर्वे*कुशल-प्रश्नं

* सर्वेण नगरेण इत्यार्षः विभक्ति प्रयोगः। २०८।२२

कृत्वा धृत-राष्ट्रस्य शासनात् वेश्मानि न्यविशन्त । ते महाबलाः महात्मानः कंचित् कालं विश्रान्ताः राज्ञा धृतराष्ट्रेण शान्तनवेन चाहूताः ।

धृतराष्ट्र उवाच—"कौन्तेय ! भ्रातृभिः सह मम गदतः (वचनं) निबोध । पुनः नो विग्रहो मा भूत् । खाण्डव प्रस्थम् आविश । तत्र वज्रिणा त्रिदशानिव पार्थेन संरक्ष्यमाणान् तत्र वसतः वः कश्चित् प्रबाधितुं न शक्तः । राज्यस्य अर्धं सम्प्राप्य खाण्डव-प्रस्थम् आविश ।

वैशम्पायन उवाच—तद्वाक्यं प्रतिगृह्य, नृपं च प्रणम्य ततः सर्वे मनुजर्षभाः तत् घोरं वनं प्रतस्थिरे । राज्यस्य अर्धं सम्प्राप्य खाण्डव-प्रस्थम् अविशन् । ततः ते कृष्णपुरोगमाः अच्युताः पाण्डवाः तत्र गत्वा तद्वै पुरं मण्डयां चक्रिरे । ततः द्वैपायनपुरोगमा महारथाः शान्ति कृत्वा, शिवे पुण्ये देशे नगरं मापयामासुः । सागर-प्रतिरूपाभिः परखिाभिः अलंकृतम्, दिवमावृत्य तिष्ठता प्राकारेण च सम्पन्नं, हिम-रश्मि-निभेन पाण्डुराभ्र-प्रकाशेन तत् पुरश्रेष्ठं शुशुभे, यथा नागैः भोगवती । द्विपक्ष-गरुड-प्रख्यैः द्वारैः सौधैः च शोभितम्, अभ्राचल प्रख्यैः मन्दरोपमैः गोपुरैः गुप्तम्, विविधैः अतिनिविद्धैः, शस्त्रोपेतैः सुसंवृतैः शक्तिभिः च द्विजिह्वैः पन्नगैः इव आवृतम्, अभ्यासिकै तल्पैः युक्तं, योध-रक्षितं शुशुभे । तीक्ष्णाङ्कुश-

शतघ्नीभिः यन्त्रजालैः च शोभितं तत् पुरं आयसैः महाचक्रैः शुशुभे। सुविभक्त-महारथ्यं, देवता-बाधवर्जितम्, विविधैः पाण्डुरैः भवनोत्तमैः विरोचमानं, त्रिविष्टप-संकाशम् इन्द्र-प्रस्थं व्यरोचत। तत्र रम्ये शिवे देशे आकाश-विद्धं मेघवृन्दम् इव विद्युत्-समवृतम् कौरवस्य निवेशनं शुशुभे।

राजन्! सर्व-वेद-विदां वराः द्विजा तत्र अगच्छन्। तथा सर्व-भाषा-विदः निवासं रोचयन्ति स्म। नाना दिग्भ्यः धनार्थिनः वणिजः तत्र अभ्ययुः। तदा सर्व-शिल्प विदः तत्र वासाय अभ्यागमन्।

नगरस्य समन्ततः आम्रैः आम्रातकैः, नीपैः तथा अशोक-चम्पकैः, पुन्नागैः पुष्पैः, लकुचैः तथा पनसैः, शाल ताल तमालैः, मनोहरैः सुपुष्पैः, सकेतकैः बकुलैः च फलभारावनामितैः प्राचीनामलकैः, लोध्रैः, सुपुष्पितैः अङ्कोलैः च, जम्बूभिः, पाटलाभिः, कुब्जकैः, अतिमुक्तकैः करवीरैः, पारिजातैः, अन्यैः च विविधैः नित्य-पुष्प-फलोपेतैः नाना-द्विज-गुणायुतैः, मत्त-बर्हिण-संघुष्टैः, सदामदैः कोकिलैः, आदर्श-विमल-गृहैः, विविधैः च लतागृहैः, जगती-पर्वतैः, तथा मनोहरैः चित्रगृहैः, परमाम्भसा पूर्णाभिः विविधाभिः च वापीभिः, पद्मोत्पल-सुगन्धिभिः

अतिरम्यैः हंस-कारण्डव-युतैः चक्रवाकोपशोभितैः सरोभिः (शोभितानि) रम्याणि उद्यानानि आसन् ।

महाराज । तेषां महत् पुण्य जनोपेतं राष्ट्रमाविशतां पाण्डवानां प्रीतिः शश्वत् अवर्धत । तत्र राज्ञा भीष्मेण धर्मप्रणयने कृते पाण्डवाः खाण्डव-प्रस्थ वासिनः समपद्यन्त । तैः इन्द्र-कल्पैः पञ्चभिः महेष्वासैः समन्वितं तत्पुर-श्रेष्ठं शुशुभे, नागैः यथा भोगवती ।

राजन् ! तां निवेश्य ततः तदा वीरः केशवः रामेण सह पाण्डवानुमतः * द्वारवतीं ययौ ।

इति श्री महाभारते सत-शाहस्र्यां राज्यलम्भः ।

## इति प्रथमो भागः

---

* पाण्डवानुयते इत्यार्षः प्रयोगः २०६।५८

